# KARIKAVALI,

BY

## VISVANATHA PANCHANANA

WITH

## A NEW COMMENTARY PRAJNA MANORAMA

BY


PANDIT DURGADATTA SASTRI,

*2nd Pandit Oriental College, Lahore.*

SON OF

PANDIT BALADEVA PUROHITA,

*Sujanpur Tira, District Kangra.*


1913.

श्रीः

# *कारिकावली*

विश्वनाथ पञ्चानन विरचिता


काङ्गरा-प्रान्तस्थ-सुजानपुरटीहराभिजन-पण्डित-बल्देव

पुरोहित-तनूज—लवपुरीय-प्राच्यविद्यालयान्तर्गत

संस्कृतश्रेणी-द्वितीयाध्यापक-

पण्डित दुर्गादत्तशास्त्रि—विरचितया


प्राज्ञमनोरमाख्यनूतनव्याख्यया समभूषिता


ऐनड ब्रादरसंमदा

लवपुरे

बाम्बे यन्त्रालये लाला दुनीचन्द प्रबन्धेन मुद्रापिता

Printed by L. Duni Chand Manager of the Bombay Machine Press, Lahore.

द्वितीयावृत्ति १००० ]  १९१३  [ मूल्य ॥/)

Published by Ened Bros., Lahore.

# ॥ भूमिका ॥

एतद्ग्रन्थ मुद्रणात्पूर्वं प्राज्ञपरीक्षायां तृतीयपत्रे न्यायग्र स्थाने तर्कसंग्रहः सटीकः स्थापितोऽभूत् । परं न्यायशा तावती व्युत्पत्तिर्नसमजनिष्यत यावत्या पूर्वोक्तपरीक्षामुत्ती तस्मिन्नेव पत्रे नियतां न्यायसिद्धान्तमुक्तावलीमध्येतुमुपयु योग्यता समपत्स्यत । तामिमां न्यूनतां परिहर्त्तुं लवपुरस्थ-वि विद्यालयप्रधानाध्यापकैर्महामहोपाध्यायोपपदालङ्कृतैः श्रीमत् ण्डितशिवदत्तशर्मभिर्मुक्तावल्या मूलभूतायाः कारिकाव अतिलध्वीं सुगमार्थां प्राज्ञमनोरमाख्यां व्याख्यां विधातुमहमुत्स हितः । मया च तेषा मनुमतिं सुमनोमालामिवशिरसि धृत्वाऽ रेणैवेयं सपापिशिष्टा बालबोधिनी व्याख्याविरच्य तच्चरणकमल पुष्पाञ्जलिरिव समर्पिता । ते च मत्कीर्त्तिसंवर्धनधिया प मनन्तया चैतत्पुस्तकमुद्रणाय देशिकपद्दाकोपाध्यक्ष--महाश द्य श्रीविहारीलालसुतान् "ऐनेडब्रादरस" इति संकेतप्रसिद्धा ईश्वरीप्रसाद पद्वाच्यान् प्रोत्साहयामासुः, ते च धनिकसुर एतत्पुस्तकप्रचाराय स्वीयद्रव्यव्ययेन मुद्राप्य प्रकाशतां निन्यु अतः पुस्तकस्यास्य प्राप्तिरपि तेभ्य एव भविष्यति ॥

पं० दुर्गादत्त शास्त्री ।

# कारिकावली ।

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य वीजाय ॥१॥

दुर्गां देवीं नमस्कृत्य दुर्गादत्तो बलात्मजः ।
करोमि कारिकावल्या व्याख्यां प्राज्ञमनोरमाम् ॥ १ ॥

ॐ श्रीगणेशायनमः। श्री सरस्वत्यैनमः । गुरवेनमः। इह खलु परमकारुणिकः श्रीविश्वनाथपञ्चाननभट्टाचार्यो न्यायशास्त्रं व्युत्पित्सुमाणवकहेतवे सकलन्यायशास्त्रप्रक्रियारहस्यं कारिकावल्या संगृह्य प्रणिनीषुरादौ निर्विघ्नसमाप्त्यादिफलकं स्वेष्टदेवताप्रणतिलक्षणं मङ्गलमाचरति—नूतनेति । नूतनश्चासौ जलधर इतिनूतनजलधरः नूतनजलधरस्य रुचिरिव रुचिर्यस्य तस्मै। पुनः गोपानां वध्व्य इति गोपवधूव्यः, गोपवधूटीनां दुकूलानि इति गोपवधूटीदुकूलानि गोपवधूटीदुकूलानां चौर इति गोपवधूटीदुकूलचौरस्तस्मै। संसार एव महीरुहः संसारमहीरुहस्तस्य वीजाय निमित्तकारणाय। तस्मै लोकवेदप्रसिद्धाय कृष्णाय परमात्मने नमः ॥

आराधकस्येष्टसिद्धावाराध्यस्याविलम्बबोधनाय प्रथमं विशेषणम्। आराधकं प्रति आराध्यस्य हर्षावस्थासूचनाय द्वितीयं विशेषणम्। स्वामीश्वरास्तित्वे प्रमाणोपन्यासाय च तृतीयं विशेषणम् ।

द्वितीय विशेषणे च चौरपदोपादानेन भगवति दोषो नाशङ्कनीयः, स्त्रीविशेषोपादानेन परिहासावगमे तत्परिहारात् ॥ १ ॥

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाभावः पदार्थाः सप्त कीर्त्तिताः ॥२॥

तत्र तावद् यथोद्देशं सप्तपदार्थानां लक्षणानि लिख्यन्ते । गुणाश्रयत्वं द्रव्यस्य लक्षणम्, गुणो द्रव्यमित्यसम्भववारणाय 'आश्रय' पदम् । आकाङ्क्षावारणाय 'गुणपदम्' ॥ द्रव्यकर्मभिन्नत्वे सति जातिमत्त्वं गुणस्य लक्षणम्, द्रव्यकर्मणोरतिव्याप्तिवारणाय आद्यं दलम्, सामान्यादिषु चातिव्याप्तिवारणाय द्वितीयं दलम् ॥ संयोगभिन्नत्वे सति संयोगासमवायित्वं कर्मणो लक्षणम्, संयोगजसंयोगेऽतिव्याप्तिवारणाय सत्यन्तम्, घटादिषु चातिव्याप्तिवारणाय च अन्त्यम् । नित्यत्वे सत्यनेकसमवेतत्वं सामान्यस्य लक्षणम्, संयोगादावतिव्याप्तिवारणाय नित्यत्व इति, गगनपरिमाणेचातिव्याप्तिवारणाय अनेकसमवेतत्वमिति, नित्ये चानेकवृत्त्यत्यन्ताभावेऽतिप्रसङ्गभङ्गायच वृत्तित्वं विहाय समवायनिवेशः ॥ स्वतोव्यावृत्तत्वं विशेषस्य लक्षणम्, स्वस्वावयवद्वारा व्यावृत्तेर्घटादावतिप्रसङ्ग वारणाय 'स्वत' इति । नित्यत्वे सति संबन्धत्वं समवायस्य लक्षणम्, संयोगादा वतिव्याप्तिवारणाय विशेषणम्, आकाशादावतिव्याप्तिवारणाय च विशेष्यम् । द्रव्यादिषट्कान्योन्याभाववत्वमभावस्य लक्षणम् । पटादिप्रतियोगिकान्योन्याभाववतिघटादावति प्रसङ्गनिवृत्तये, द्रव्यादिषट्कग्रहणम् ॥

पदानामर्थाः पदार्थाः । अभिधेयत्वं पदार्थसामान्यस्य लक्षणम् ।

अत्रेदमवधेयं पदार्थाः असंख्याः सन्ति किन्तु पदार्थविभाजकोपाधयः सप्तैव। तेषु द्रव्यत्वगुणत्वकर्मत्वानि जातयः, सामान्यत्वादीन्युपाधयः। जातिभिन्नोधर्म्ममात्रमुपाधिः, उपाधिर्द्विविधः सखण्डोपाधिरखं डोपाधिश्च। सखण्डोपाधिस्तु बहुपदार्थघटितो धर्म्मः। स च धर्म्मः क्लृप्तपदार्थान्तर्भूत एव यथा भावत्वादिः। अखण्डोपाधिश्चानिर्वचनीय धर्मः। स चातिरिक्तधर्म एव ॥२॥

क्षित्यप्तेजो मरुद्व्योमकाला दिग्देहिनौ मनः।
द्रव्याण्यथ गुणारूपं रसोगन्धस्ततः परम् ॥ ३ ॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम्।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

अथ यथोद्देशं द्रव्याणि विभजते क्षितीति। क्षितिः पृथिवी। आपो जलानि। तेजो वन्हिः। मरुद्वायुः। व्योम आकाशः। कालः समयः। दिगाशा। देही आत्मा। मनः प्रसिद्धम्। पर्य्यायप्रदर्शनं क्षयवासावपिक्षिती इत्याद्यर्थान्तरभ्रमनिराकरणार्थम्? तथाहि क्षयवासावपिक्षिती इतिकोपादकर्तृकारकाधिकारीपक्तिन्प्रत्ययान्तत्वमूलकात्क्षितिशब्दादर्थान्तरभ्रमनिरासाय-क्षितिः पृथिवीति। एवं जलशब्दात् तच्छब्दवाच्यः कश्चिदासीदितिबोधस्यानुभविकतया अप्तृन्तृजित्यादि पाणिन्यादिवाक्यप्रामाण्येनच शब्दोपि शब्दार्थ इतिशाब्दिकसमया दत्र शब्दपरत्वं

मा विज्ञायीसापोजज्ञानीत्युक्तम् । 'तेजो धाम्नि पराक्रमे' 'तेजः प्रभावेदीप्तौ च' इति विश्वामराभ्यां पराक्रमाद्यर्थबोधवारणाय तेजोवन्हिरिति । मरुतौ पवनामराविस्यनुशासनात् देवसामान्यार्थकत्वं देवविशेषार्थकत्वं च वारयितुं—मरुद्वायुरिति । व्योमन् शब्दस्य ब्रह्मणि श्रुतिप्रसिद्धेर्व्योम आकाश इति । कालशब्दस्यान्तकादिबोधकत्वात् कालः समय इति । दिक् शब्दस्य दिश् अतिसर्जने इति धातुना निष्पन्नस्य दानार्थकत्वात् दिगाशेति । सम्बन्ध्यर्थकेन्प्रत्ययान्त देहिशब्देन देहावयवस्यापि बोधसंभवा- देही आत्मा इति ॥

गुणान् विभजते अथेति । परिमितिः परिमाणम् । अदृष्टं धर्माधर्मौ, एते चतुर्विंशतिर्गुणाः । रूपरसगन्धस्पर्शाः संख्यापरिमाणे पृथक्त्वं संयोगविभागौ परत्वापरत्वबुद्धयः सुखदुःखेच्छाद्वेषप्रयत्नाश्चेति वैशेषिकसूत्रस्थचकारस्यानुक्तसमुच्चायकत्वा न्नसूत्रविरोध इति बोध्यम् । लघुत्वस्य गुरुत्वाभावरूपत्वात्, आलस्यस्य कृत्यभावरूपत्वात्, मृदुत्वकठिनत्वयोरवयवसंयोगविशेषरूपत्वान्न चतुर्विंशति व्याघातः ॥ ३ । ४ । ५ ॥

उत्क्षेपणं ततोपक्षेपणमाकुंचनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पंच च ॥६॥

कर्माणि विभंजते उत्क्षेपणमिति ऊर्द्ध्वदेशसंयोगकारणं कर्म उत्क्षेपणं तच्चोरिक्षप्तलोष्टादौ प्रसिद्धम् । अधोदेशसंयोगकारणं कर्म अपक्षेपणं तच्च भृगुपतनादौ बोध्यम् । एवं शरीरसन्निकृष्टसंयोगकारणं कर्म आकुञ्चनं नौकारज्जाकर्षणादौ ज्ञेयम् । विप्रकृष्टसंयोग-

हेतुः कर्म प्रसारणं तच्चाक्षप्रक्षेपेध्येयम् । पूर्वदेशविभागावच्छिन्नोत्तरदेशसंयोगानुकूलं, कर्म गमनमेतानि पञ्च कर्माणि ॥६॥

भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।
तिर्य्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

ननु भ्रमणादिकं कर्म कुतो नोक्तमतआह भ्रमणमिति भ्रमणं जलयन्त्रादौ, स्यन्दनं जले, ऊर्ध्वज्वलनमग्नौ, तिर्य्यग्गमनं वायौ, अपिना पतनप्लवनधावनस्कन्दितादिसमुच्चयः । एतत्सर्वं गमनेऽन्तर्भवति, उत्क्षिप्ते लोष्टादावूर्ध्वं गच्छतीत्यवक्षिप्तादौ चाधोगच्छतीतिव्यवहारदर्शनादुत्क्षेपणादिकमपि गमनविशेष एवास्तु तेषां पृथग्विभागोऽनुचित इति भ्रमनिराकरणायैवकारः । स च भिन्नक्रमे भ्रमणादिकमेव गमनाल्लभ्यते नतूत्क्षेपणादिकमित्यर्थः ।

अयंभाव–ऊर्ध्वसंयोगानुकूल क्रिया नोवक्षेपणं तथासति लोष्टमूर्ध्वं क्षिपतीत्यस्थापत्तेः, लोष्टमुत्क्षिपतीत्यस्यानापत्तेश्च । क्रियाजन्यफल संयोगस्यलोष्टसत्वेपि परसमवेतक्रियाजन्यफलानाश्रयत्वेन लोष्टस्य कर्मत्वानुपपत्तेः । ऊर्द्धसंयोगानुकूलक्रियाया लोष्टसमवेतत्वात्कर्तृत्वर्यत्ति प्रसङ्गवारणाय कर्मलक्षणे परसमवेतेतिविशेषणस्यावश्यकत्वा त्, अपि तूर्द्धसंयोगानुकूलक्रियानुकूलक्रिया तत् । तादृशी क्रियोत्क्षेपकर्त्तुः शरीरक्रियेति परसमवेततज्जन्यक्रियारूपफलाश्रयत्वाल्लोष्टादेःकर्मत्वोपपत्तिः, एवं चोत्क्षेपणादीनां गमनतो महत्तरवैलक्षण्यान्नतेषां तदन्तर्भावः, एतेन महर्षेः स्वतन्त्रेच्छयोत्क्षेपणादीनां पृथग्विभाग इति प्रलापो निरस्त उपदर्शितरीत्या गमनान्तर्भावस्यवक्तुमशक्यत्वात् ॥ ७ ॥

सामान्यं द्विविधं प्रोक्तं परंचापरमेव च ।
द्रव्यादि त्रिकवृत्तिस्तुसत्ता परतयोच्यते ॥ ८ ॥
परभिन्ना तु या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥९॥
व्यापकत्वात्परापि स्याद्व्याप्यत्वादपरापि च ।

सामान्यं विभजते सामान्यमिति। तदेवदर्शयति अवधारणार्थकेन एवकारेण भेदान्तरनिवृत्तिर्दर्शिता द्रव्यगुणकर्मवृत्तिः सत्ता परं सामान्यमित्यर्थः ॥ ८ ॥

परं सत्ता तद्भिन्ना या जातिर्द्रव्यत्वपृथिवीत्वघटत्वादिरूपा सा अपरसामान्यं तत्राप्यवान्तरविशेषमाह द्रव्यत्वपृथिवीत्वगुणत्वादिजातिः परापरसामान्यम् ॥ ९ ॥

तत्रोपपत्तिमाह अधिकदेशवृत्तित्वं व्यापकत्वं न्यूनदेशवृत्तित्वं, व्याप्यत्वं सत्ताजातेर्द्रव्यत्वापेक्षया व्यापकत्वात् परत्वं, सत्तापेक्षया न्यूनदेशवृत्तित्वाद् द्रव्यत्वस्यापरत्वम् । एवं पृथिवीत्वं घटत्वाद्यपेक्षया व्यापकं द्रव्यत्वाऽपेक्षयाऽव्यापकम् ॥

अन्त्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितः ॥१०॥

विशेषं निरूपयति अन्त्य इति । पृथिव्यादिचतुष्टयपरमाणवोव्योमादिपञ्चकञ्च नित्यद्रव्याणि तेषु वृत्तिर्यस्यसः । अनित्यद्रव्याणां घटादीनां स्वस्वावयवैरेव परस्परं भेदः । नित्यद्रव्याणां व्यावृत्तौ विशेष एवोपायः । ननु विशेषाणां व्यावृत्यर्थं विशेषान्तरं

कल्प्यमत आह अन्त्य इति । अन्ते अवसाने वर्त्तते इति अन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः । तेन तेषां स्वतोव्यावृत्तत्वात् न तत्र विशेषान्तरकल्पनाऽन्यथानवस्थापातात् ॥ १० ॥

घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तितः ॥११॥

समवायं निरूपयति घटादीनामिति घटादीनामवयविनां कपाला दावषयवेषु गुणकर्म्मणोर्द्रव्येषु द्रव्यगुणकर्मसु व्यक्तिषु जातेः सामान्यस्य, चकारेण विशेषाणां नित्यद्रव्येषु यः सम्बन्धः स समवाय उक्तः, एतानि चायुतसिद्धपदेनोच्यन्ते, अयुतसिद्धस्य लक्षणन्तु ग्रन्थान्तरेऽभिहितं 'ययोर्मध्य एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुत सिद्धौ ॥ ११ ॥

अभावस्तु द्विधान्योन्यासंसर्गाभावभेदतः ।
प्रागभावस्तथाध्वंसोऽप्यत्यन्ताभावएव च ॥१२॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।

अभावं विभजते अभावस्त्विति अन्योन्याभावः संसर्गाभावश्चेत्यभावो द्विधेत्यर्थः। तत्रान्योन्याभावभिन्नाभावत्वं संसर्गाभावत्वम्। अन्योन्याभावेऽतिव्याप्तिवारणायान्योन्याभावभिन्नेति, घटादावतिव्याप्तिवारणायाभावपदम् । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वं यथा घटः पटोनभवति, प्रागभावध्वंसाभाववारणाय तादात्म्य इति, अत्यन्ताभाववारणाय तादात्म्यत्वेन तादात्म्यसम्बन्धो विवक्षणीयः । सचैको नित्यश्च ।

संसर्गाभावं विभजते प्रागभाव इति । विनाश्यभावत्वं, ध्वंसेऽति-व्याप्तिवारणाय विनाशीति । जन्याभावत्वं ध्वंसत्वं, प्रागभावेऽति-व्याप्तिवारणाय जन्येति नित्यसंसर्गाभावत्वमत्यन्ताभावत्वं, यथा भूतले घटोनास्ति, ध्वंसादिवारणाय नित्यपदम् घटाभाववद्देशे घटानयने तु घटकालस्य सम्बन्धविघटकतया नित्यस्याप्यत्यन्ता-भावस्याप्रतीतिर्ज्ञेया ॥ १२ ॥

सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥१३॥
द्रव्यादयः पञ्च भावा अनेके समवायिनः ।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥१४॥
सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥१५॥

अथ पदार्थानां साधर्म्यवैधर्म्ये वक्तुं प्रक्रमते सप्तानामित्यादिना ज्ञेयत्वं सप्तानांपदार्थानां साधर्म्यमीश्वरज्ञानविषयतायाः सर्वत्र सत्वात्, आदिनाऽभिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥ १३ ॥

द्रव्यादीनां षण्णां साधर्म्यं भावत्वं सप्तमस्याभावस्याभिधाने-नाभिहितप्रायमिति पुनरुक्तिभयेन तदुपेक्ष्य पञ्चानां साधर्म्यमाह द्रव्यादय इति । द्रव्यादीनां पञ्चानां साधर्म्यमनेकत्वेसति भावत्वं समवायित्वञ्च ज्ञेयम् । समवेतसमवेतत्वं द्रव्यादिचतुर्णां, द्रव्यादित्र-याणां सत्तावत्वं, गुणादिषण्णां गुणशून्यत्वं कर्मशून्यत्वञ्च ॥१४॥

सामान्यादिचतुष्टयस्य सामान्यानधिकरणत्वम् । पारिमाण्ड-ल्यमणुपरिमाणं तद्द्व्यणुकपरिमाणस्याप्युपलक्षणं तस्याप्यकारण-

त्त्वात् तद्भिन्नानां कारणत्वं साधर्म्यम्। अणुद्व्यणुकपरिमाणयोस्तु न कारणत्वमित्यर्थः। आद्यस्य कारणत्वे द्व्यणुकस्याणुतरत्वापत्तेः। द्वितीयस्य च कारणत्वे त्र्यणुकस्याप्रत्यक्षत्वापत्तेः। परिमाणस्यस्व-समानजातीयोत्कृष्टपरिमाणजनकत्वानियमात् अत एवाग्रे तयोः संख्याजन्यत्वं वक्ष्यति॥

इदमत्र तत्त्वम् "परिमाणं स्वसमानजातीयोत्कृष्टपरिमाणं जनयति" इति नैयायिकनियम, एवं च सति अणुपरिमाणं द्व्य-णुकपरिमाणं तदा जनयेत् यदि द्व्यणुकपरिमाणमणुपरिमाणापे क्षयोत्कृष्टं भवेत् भवतितु तत्ततोऽपकृष्टम्। कुत इति चेत्तदपि श्रृणुत अणुशब्दादुत्कर्षवाची तरप्प्रत्ययो यद्यानीयेत तदाऽणुत-रशब्दः शाब्दिकरीत्याऽणोरप्यपकृष्टार्थोभवति नोत्कृष्टार्थस्तस्मा-दुत्कृष्टस्वभावादृद्व्यणुकपरिमाणस्यं नाणुपरिमाण कारणम्, एव-मेव द्व्यणुकपरिमाणं त्र्यणुक परिमाणं प्रति तदा कारणं भवेत् यदि त्र्यणुकपरिमाणं द्व्यणुक परिमाणादुत्कृष्टमपि भवेत्। तत्स-मानजातीयमपि यदि स्यात्। परन्तु त्र्यणुकपरिमाणं द्व्यणुकप-रिमाणापेक्षयोत्कृष्टं तु वर्त्तते परन्तु तत्समान जातीयमणु नास्ति किन्तु विजातीयमहदस्ति। तत्र किं कारणमितिचेदुच्यते "त्रि-भिर्द्व्यणुकैरेकं त्र्यणुकमारभ्यते" इति हि नैयायिकसिद्धान्तः; ततोऽनेकावयविजन्यद्रव्यत्वेन त्र्यणुकेऽपकृष्टमहत्वमुत्पद्यते, अप-कृष्टमहत्त्वं 'प्रत्यनेकावयविजन्यद्रव्यत्वस्य' प्रयोजकत्वात्। द्व्यणु-केतु 'द्वाभ्यांपरमाणुभ्यामेकं द्व्यणुकमारभ्यत' इति सिद्धान्तेन अने-

कावयवजन्यत्वेन अनेकावयविजन्यत्वाभावादपकृष्टमहत्त्वमपि न किन्त्व णुत्वमेव, अत एवोक्तमणुपरिमाणं द्व्यणुकस्याप्युपलक्षण-मितिज्ञेयम्। तस्मात् ते द्वे अपि न कारणे इति सिद्धान्तः ॥१८॥

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्त्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्त्तितम् ॥१६॥
समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तंनिमित्तहेतुत्वम् ॥१७॥
यत्समवेतं कार्यं भवत्यवेहि समवायिजनकं तत् ।
तत्रासन्नं जनकंद्वितीयमाभ्यां परंतृतीयंस्यात् ॥१८

कारणत्वमुदाहृतमित्युक्तं तत्र किंकारणत्वमित्यपेक्षायां कारणत्वमेव लक्षयति अन्यथासिद्धीति पूर्ववर्त्तिताकदाचिदागत-रासभादावप्यस्त्यत आह नियतेति। नियतपूर्ववर्त्तिता दण्डत्वा-दावपीत्यत उक्तमन्यथासिद्धिशून्यस्येति । अन्यथासिद्धनियत-पूर्ववर्त्तित्वं कारणत्वं यथा घटम्प्रति दण्डादेः। तद्विभजते तस्येति कारणत्वस्य ॥१६॥

तदेवाह समवायीतिस्पष्टम् ॥ १७ ॥

समवायिकारणं लक्षयति। यदिति कार्यं यस्मिन् समवेतं समवायसम्बन्धेन वर्त्तमानं भवति जायते तत्समवायिजनकं सम-वायिकारणमवेहि जानीहि समवायसम्बन्धेन कार्यवत्त्वं समवा-यिकारणत्वमिति फलितं तत्रोदाहरणं यथा तन्तवः पटस्य। पट-स्तन्तुषु समवेतो जायतेऽतः पटस्य तन्तवः समवायिकारणम्।

असमवायिकारणं लक्षयति तत्रेति । तत्र समवायिकारणे आसन्नं सन्निहितं द्वितीयमसमवायिकारणं समवायिकारणवृत्तिकारणम समवायिकारणमिति फलितं यथा तन्तुसंयोगः पटम्प्रति, तन्तुरूपञ्च पटरूपं प्रति । जनकमित्यनुपादानेऽजनके तन्तुत्वादावपि तत्प्रसक्तिरतो जनकमिति । अत्रासत्तिर्द्विधा कार्य्यैकार्थप्रत्यासत्तिः, 'कारणैकार्थप्रत्यासत्तिश्च' । तत्राद्या तन्तुसंयोगे, द्वितीया च तन्तुरूपे बोध्या । निमित्तकारणं लक्षयति । आभ्यामिति समवायसमवायिभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणं समवायसमवायिभिन्नकारणत्वं निमित्तकारणत्वमितिफलितं तद्यथा पटंप्रति तुर्य्यादिकम् ॥ १८ ॥

येन सह पूर्वभावः कारणमादाय वा यस्य ।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ।१९।
जनकं प्रति पूर्ववर्त्तितामपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापियद्भवेन्नियतावश्यकपूर्वभाविनः।२०

कारणलक्षणे अन्यथासिद्धीत्यायातं तत्किमन्यथासिद्धमित्यत आह येनेति । येन धर्मेण सह कारणस्य स्वकार्य्यं प्रति पूर्वभावः पूर्ववर्त्तिता गृह्यते सधर्मोऽन्यथासिद्धः । द्वितीयमन्यथासिद्धमाह कारणमिति । यस्य स्वात्मना कार्य्यं प्रति पूर्वभावो न भवेत् किन्तु स्वकारणं गृहीत्वैव सोऽप्यन्यथासिद्धः । तृतीयमन्यथासिद्धमाह अन्यं प्रतीति । अन्यकार्य्यं प्रति गृहीतपूर्वभावो यः कार्य्यान्तरं प्रत्यपि गृहतिकारणताकः सः ॥ १९ ॥ चतुर्थमन्यथासिद्धमाह जनकमिति । एककार्य्यं प्रति गृहीतपूर्ववृत्तिर्यः कार्य्यान्तरं प्रत्यपि पूर्ववर्त्तितया गृह्येत सः । पञ्चममन्यथासिद्धमाह अतिरिक्तमिति ।

एतच्चतुष्टयभिन्नं नियतावश्यकपूर्वभाविभिन्नं यत् सपञ्चम इत्यर्थः अनियत रासभादेर्वारणाय नियतेत्यादि ॥२०॥

एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥२१॥
तृतीयन्तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥२२॥

एतेषां क्रमादुदाहरणानि दर्शयति एत इति । घटादौ कार्ये एते क्रमात्पञ्चान्यथासिद्धा बोध्याः तत्रादिमं दण्डत्वं तेनैव सा दण्डस्य घटंप्रति पूर्ववर्त्तित्वं ग्रहात् । द्वितीयदण्डरूपं तस्य हि कारणं दण्डं गृहीत्वैव कार्य्यं घटंप्रति पूर्वभावग्रहात् नतु स्वात्मना ॥२१॥
तृतीयं व्योम आकाश आकाशस्य शब्दम्प्रति पूर्वभावं गृहीत्वैव घटं प्रत्यपि पूर्वभावग्रहात् । चतुर्थः कुलालजनकः कुलालपिता तस्य घटं प्रति न स्वातन्त्र्येण पूर्ववर्त्तितागृह्यते अपितु जनकं घटजनकं प्रति पूर्ववृत्तितां 'परिज्ञायैवेति जनकजनकतया' सोन्यथासिद्धः। पञ्चमो रासभादिः घटोत्पत्तौ दण्डचक्रसलिलसूत्रमृत्पिण्डकुलाल इत्येवकारणसामग्री नियतावश्यकपूर्वभाविनीति कदाचिदागतो रासभोतिरिक्ततयान्यथासिद्धः । पञ्चस्वस्यैव मुख्यत्वमित्याह एतेष्विति । एतेषूक्तेषुपञ्चस्वन्यथासिद्धेष्वसौ पञ्चमोरासभादिः आवश्यकः उपेक्षितुमनर्हः अन्येषामस्मिन्नेवांतर्भावसम्भवात् ॥ २२ ॥

समवायिकारणत्वं द्रव्यस्यैवेतिविज्ञेयम् ।
गुणकर्ममात्रवृत्तिज्ञेयमथाप्यसमवायिहेतुत्वम् ॥२३॥

समवायीति। एवशब्दोऽवधारणार्थकः। तेन समवायिकारणत्वं द्रव्यमात्रस्यैवसाधर्म्यम्। असमवायिकारणत्वमितियद्यपिमूलाद्गुण कर्मणोः साधर्म्यस्पष्टं ज्ञायतेतथाप्यात्मविशेषगुणेष्वव्याप्त्यापत्तेस्त-द्भिन्नानांवैधर्म्यमित्यत्र तात्पर्यं बोध्यमात्मविशेषगुणानां कुत्राप्य समवायिकारणत्वं नास्तीति सिद्धान्तात्॥ २३॥

अन्यत्र नित्ये द्रव्येभ्य आश्रितत्वमिहोच्यते।
क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता॥२४॥
क्षितिर्जलं तथातेजः पवनोमन एवच।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी॥ २५॥

अन्यत्रेति। नित्यद्रव्येभ्यः अन्यत्र, नित्यद्रव्याणि विहाय तदतिरिक्तानामाश्रितत्वं साधर्म्यम्॥ २४॥

इदानीं द्रव्याणामेवसाधर्म्यमाह क्षित्यादीनामिति। द्रव्यत्ववत्त्वं गुणवत्त्वंच सर्वद्रव्यसाधर्म्यम्। क्षितिरिति। क्षित्यप्तेजोमरुन्मनसां परत्ववत्त्वमपरत्ववत्त्वमपकृष्टपरिमाणात्मकमूर्तत्ववत्त्वंकर्मवत्त्वं वेग-वत्त्वं च साधर्म्यम्॥ २५॥

कालखात्मदिशां सर्वगतत्वं परमं महत्।
क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि॥२६॥

कालेति। कालाकाशात्मदिशां सर्वगत्वं सर्वमूर्तसंयोगित्वं परममहत्त्वं च साधर्म्यम्। क्षित्यप्तेजोवाय्वाकाशानां भूतत्वंसाधर्म्यम्। क्षित्यादि

चतुर्णां स्पर्शवत्त्वं साधर्म्यम् ॥ २६ ॥

द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥२७॥

द्रव्येति । क्षित्यादिचतुर्णां द्रव्यारम्भकत्त्वम् । आकाशात्मनां अव्याप्यवृत्तिगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं च साधर्म्यम् ॥२७॥

रूपद्रवत्वप्रत्यक्षयोगि स्यात् प्रथमं त्रिकम् ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥

रूपेति । क्षित्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं वहिरिन्द्रियजन्यप्रत्यक्षविषयत्वं च साधर्म्यम् । पृथिवीजलयोर्गुरुत्त्ववत्त्वं रसवत्त्वं च पृथ्वीतेजसोस्तु नैमित्तिकद्रवत्ववत्त्वं साधर्म्यम् ॥ २८ ॥

आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।
यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥२९॥

आत्मान इति । पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वं साधर्म्यम् । इदानीं वैधर्म्यमाह यदुक्तमिति । ज्ञेयत्वादिकं पदार्थमात्रस्य 'साधर्म्यमुक्तमतस्तदतिरिक्तं' यद्यस्य साधर्म्यमुक्तं तदितरस्यवैधर्म्यं बोध्यम् ॥ २९ ॥

स्पर्शादयोऽष्टौ वेगाख्यसंस्कारोमरुतो गुणाः ।
अष्टौ स्पर्शादयो रूपं द्रवोवेगश्च तेजसि ॥३०॥
स्पर्शादयोष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकम् ।
रूपं रसस्तथा स्नेहोवारिण्येते चतुर्दश ॥ ३१ ॥

स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकंभावना तथा ॥३२॥
धर्माधर्मौगुणा एते आत्मनः स्युश्चतुर्दश ।
संख्यादिपञ्चकंकालदिशोः शब्दश्च ते चखे ॥३३॥
संख्यादयः पंच बुद्धिरिच्छायत्नोऽपि चेश्वरे ।
परापरत्वं संख्याद्याः पंच वेगश्च मानसे ॥३४॥

यद्यप्युद्देशानुसारेण पृथिव्यादिक्रमेणैव गुणानां प्रदर्शनमुचितं तथापि "वायोर्नवैकादशतेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश । दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च" ॥१॥ इति प्राचीनकारिकामनुसृत्य वाय्वादिक्रमेण गुणान् दर्शयति मूलेस्पर्शादयोऽष्टावित्यादिना । सर्वत्र तद्गुणसंविज्ञानोबहुव्रीहिः । एतेइत्यनेन श्लोकान्तरोक्तानामपि ग्रहणशङ्कानिरासाय चतुर्दशेति संख्यानिर्देशः । एवमन्यत्राऽपि ॥ ३० ॥ ३१॥ ३२ ॥

ते च खे इत्यत्र तच्छब्देन पूर्वोक्ताः संख्यादयः पञ्च गृहीताः ॥३३॥ ईश्वरे परमात्मनि । मानसे मनसि ॥ ३४ ॥

तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।
षड्विधस्तुरसस्तत्र गन्धस्तु द्विविधोमतः ॥३५॥

अथ यथोद्देशं द्रव्याणि निरूपयितुकामस्तावत्पृथिवीं निरूपयति तत्रेति । तेषु नवसु द्रव्येषु क्षितिः पृथिवी गन्धहेतुर्गन्धका-

रणं ज्ञेया कारणपदस्यात्र समवायिकारणमर्थस्तेनकालादौ नाति-प्रसङ्गः तस्यानिमित्तहेतुत्वात् । एतेन गन्धवत्त्वं पृथिव्या लक्षणम् । इदमप्युपलक्षणं तेन रूपवत्त्वादीनि लक्षणान्तराण्यपि सन्ति । अत-एवाह नानारूपवतीतिशुक्लनीलादिसप्तविधरूपवतीत्यर्थः । अत्रार्थे "रूपरसगन्धस्पर्शवती पृथिवी" इदं वैशेषिकसूत्रं प्रमाणम् । तत्र पृथिव्यां रसः मधुराम्लादिभेदेन षड्विधः गन्धः सुरभिरसुर-भिश्चेति द्विविधः ॥ ३५ ॥

स्पर्शस्तस्यास्तु विज्ञेयोह्यनुष्णाशीतपाकजः ।
नित्याऽनित्याच साद्वेधा नित्यास्यादणुलक्षणा ॥३६

स्पर्शोऽनुष्णाशीतः । वायावतिव्याप्तिवारणाय पाकज इति स्पर्शो विशेषितः । तां विभजते नित्येति सापृथिवी द्विविधा नित्या अनित्या च नित्यां दर्शयति नित्यास्यादिति अणुलक्षणा परमा-णुरूपा पृथिवी नित्या ॥ ३६ ॥

अनित्या तु तदन्या स्यात् सैवावयवयोगिनी ।
साच त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥

तदन्या परमाणुभिन्ना द्व्यणुकादिरूपा पृथिवी अनित्या । सैव अनित्या पृथिव्येव अवयवयोगिनी अवयववती सावयवेत्यर्थः । कार्य्यरूपां विभजते साचेति । साकार्य्यरूपा पृथिवी शरीरेन्द्रिय-विषयभेदात् त्रिविधा ॥ ३७ ॥

योनिजादिर्भवेद्देहमिन्द्रियं घ्राणलक्षणम् ।

विषयोद्ध्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥३८॥

तत्र देहेन्द्रियविषयेषु मध्ये तावद्देहमुदाहरति-योनिजादिरिति, योनिजं जरायुजमण्डजंच, आदिना स्वेदजोद्भिजादिकमेतत्सर्वं पार्थिवं देहं शरीरं ज्ञेयमित्यर्थः। पार्थिवमिन्द्रियमाह 'इन्द्रियमिति' गन्धग्राहकं नासाग्रवर्त्तिघ्राणेन्द्रियं पार्थिवम्। पार्थिवविषयमाह-विषय इति। द्व्यणुकमारभ्य ब्रह्माण्डान्तपर्य्यन्तः सर्वोपिगन्धवान् विषयः साक्षात् परम्परया च भोगहेतुः पार्थिवविषयः ॥३८॥

वर्णः शुक्लोरसस्पर्शौ जले मधुरशीतलौ।
स्नेहस्तत्र द्रवत्वन्तु सांसिद्धिकमुदाहृतम् ॥३९॥
नित्यतादि प्रथमवत्, किन्तु देहमयोनिजम्।
इन्द्रियं नयनं सिन्धुहिमादिर्विषयोमतः ॥४०॥

जलं निरूपयति वर्ण इति। शीतस्पर्शवत्त्वमपां लक्षणम्। जले शुक्लो वर्णः अभास्वरासितं रूपं मधुरो रसः शीतलः स्पर्शः स्नेहस्तु तत्र जले एव द्रवत्वं च जले सांसिद्धिकं स्वाभाविक-मित्यर्थः। अत्र प्रमाणम् "रूपरसस्पर्शवत्य आपो द्रवा स्निग्धाः" इति वैशेषिकसूत्रम् ॥३९॥ जलंविभजते-नित्यतादीति। प्रथमवत् पृथिव्या इव जलमपि द्विविधं नित्यमनित्यञ्जलपरमाणुरूपं नित्यं द्व्यणुकादिरूपमनित्यं सावयवम् अनित्यमपि त्रिविधं देहेन्द्रिय-विषयभेदात्। अत्र पृथिवीतोययोर्विशेषस्तमाह किन्त्विति। किन्तु परंदेहं शरीरं जलस्यायोनिजमयोनिजमेव तच्च वरुण लोके प्रसिद्धम्। रसनं रसग्राहकं जिह्वाग्रवर्त्तीन्द्रियं जलीयं ज्ञेयम्। विषयं दर्श-

यति सिन्धुहिमादिरिति सिन्धुः समुद्रः हिमं तुषारः, आदिपदात्
सरित्कासारकरकादिः सर्वोग्राह्यः ॥ ४० ॥

स्पर्श उष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् ।
नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥४१॥
इन्द्रियं नयनं वन्हिस्वर्णादिर्विषयोमतः ।

तेजोनिरूपयति स्पर्श इति । भास्वरशुक्लरूपवत्त्वं उष्णस्पर्शवत्त्वञ्च तेजोलक्षणं यथाह महर्षिः कणादः "तेजोरूपस्पर्शवत्" १.अ० २ आ० ३ सू० तेजस उष्णः स्पर्शः वन्ह्यादौ, शुक्लभास्वररूपं चादित्यप्रभादौ प्रसिद्धं नैमित्तिकं वन्हिसंयोगरूपनिमित्तादुद्भूतंद्रवत्वं तापित सुवर्णादावुपलभ्यते पूर्ववत् जलस्येव नित्यतादि अर्थात् जलवत्तेजोऽपि द्विविधं नित्यमनित्यं च नित्यं परमाणुरूपं अनित्यं सावयवं द्व्यणुकादि कार्य्यरूपं तच्च त्रिधा देहेन्द्रियविषयभेदात् तैजसं देहमयोनिजं सूर्य्यलोके प्रसिद्धम् ॥४१॥

तेजस इन्द्रियमाह इन्द्रियमिति रूपग्राहकं । कृष्णताराग्रवर्त्ति तेजस इन्द्रियमित्यर्थः । विषयमाह वह्नीति । वन्हिः काष्ठादिजन्माग्निः स्वर्णं सुवर्णं आदिपदात् तैजसमणय उत्तेजकप्रभृतयः विषयः मतोज्ञेयः सुवर्णस्य तेजस्त्वन्तु असति प्रतिबन्धकेऽत्यन्तानलसंयोगेप्यनुच्छिद्यमानद्रवत्ववत्त्वेनानुमेयम् ॥

अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः॥४२॥
तिर्य्यग्गमनवानेष ज्ञेयः, स्पर्शादिलिङ्गकः ।

पूर्ववन्नित्यताद्युक्तं, देहव्यापि त्वगिन्द्रियम्॥४३॥
प्राणादिस्तु महावायुपर्य्यन्तोविषयोमतः।

वायुं निरूपयति-अपाकज इति। पवने वायौ स्पर्शः अपाकजः पाकाज्जातः पाकजः नपाकजः अपाकजः अनुष्णाशीतः नात्युष्णः नातिशीतः मतोज्ञातः, एतेन अपाकजानुष्णाशीतस्पर्शवत्त्वं वायोर्लक्षणम्। अनुष्णाशीतस्पर्शः पृथिव्यामपीति तद्वारणाय अपाकज इति अपाकजः स्पर्शो जलादावपीति तद्व्यावृत्तये अनुष्णाशीत इति "यथाह भाष्ये महर्षिः कणादः 'स्पर्शवान् वायुः' २ अ० २ आ० ४ सूत्रम्॥४२॥

एष वायुस्तिर्य्यग्गमनवान् वक्रगतिः स्पर्शादिलिङ्गकः स्पर्श आदिः प्रथमो येषांतानि स्पर्शादीनि तानि लिङ्गानि यस्य तथोक्तः आदिपदात् शब्दधृतिकम्पा गृह्यन्ते पूर्वोक्तविजातीयस्पर्शेन वशीति विलक्षणशब्देन तृणतूलादीनां नभसि स्थितथा कम्पोगात्रविधुतिस्तेन वायुरनुमीयते। वायुं विभजते-पूर्ववदिति। वायुर्द्विविधः नित्योऽनित्यश्च नित्यः परमाणुरूपस्तदन्यो द्व्यणुकादिरूपोऽनित्यः समवेतश्च सच त्रिविधः शरीरेन्द्रियविषयभेदात् वायवीयं पिशाचादि शरीरं वायुलोके। देहव्यापि शरीरव्यापि स्पर्शग्राहकं त्वक् त्वगाख्यमिन्द्रियं वायवीयम्॥४३॥

विषयं दर्शयति-प्राणादिरिति। शरीरान्तः संचारी वायुः प्राणः तदादिकः, प्रलयकालिकः प्रचण्डवायुः महावायुः तत्पर्यन्तस्तदवधिकः सर्वोपि विषयः॥

आकाशस्य तु विज्ञेयः, शब्दो वैशेषिको गुणः॥४४

इन्द्रियन्तु भवेत् श्रोत्रमेकः, सन्नप्युपाधितः ।

आकाशं निरूपयति-आकाशस्येति । आकाशस्य शब्द एवैको वैशेषिकः विशेष एव वैशेषिकः स्वार्थेठक् किति चेति वृद्धिः विशेषगुणो ज्ञातव्यो नान्ये इत्यर्थः, एतेन शब्दाधिकरणत्वमाकाशस्य लक्षणम् शब्दवत्त्वन्तु न लक्षणम् शब्दस्य तत्र सर्वदोषलब्ध्यभावात् नित्ययोग एव तादृशार्थसंभवात् ॥४४॥

आकाशस्य शरीरविषयौ नेति केवलमिन्द्रियमाह-इन्द्रियमिति । इन्द्रियं श्रोत्रं आकाशीयं नन्वेकस्याकाशस्य कथंनानाश्रोत्रात्मकत्वमत आह एकोऽपि स आकाशः कर्णशष्कुल्याद्युपाधिभेदान्नानाश्रोत्रात्मको भवतीत्यर्थः ॥

जन्यानां जनकः कालोजगतामाश्रयोमतः॥४५॥
परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।
दूरान्तिकादिधीहेतुरेका नित्यादिगुच्यते ॥४६॥
उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।

कालं निरूपयति-जन्यानामिति । कार्य्यजातं प्रति निमित्तंकारणं काल इति जन्यमात्रजनकत्वं कालस्य लक्षणं पर्य्यवसन्नं तत्र प्रमाणमाह-इदानीं घट इत्यादिप्रतीतिबलात्स जगतामाश्रयोमतः पदार्थमात्राधारः ॥ ४५ ॥ प्रमाणान्तरमप्याह-परापरत्वेति । परत्वापरत्वज्ञानस्यासाधारणं कारणं काल एव तत्र जेष्ठे कालिकं परत्वं कनिष्ठे कालिकमपरत्वम् । सचैकश्चेत्कथं क्षणदिनमासवर्षा-

दिक्व्यवहार अतआह-क्षणादिरिति। कालस्त्वेकोऽपि उपाधिभेदात् क्षणादिव्यवहारविषयोभवति। दिशं निरूपयति-दूरान्तिकादीति। दूरत्वं दैशिकं परत्वं विप्रकृष्टपिण्डे, अन्तिकत्वं दैशिकं अपरत्वं सन्निकृष्टपिण्डे तयोर्ज्ञाने असाधारणं कारणं दिक् दूरत्वान्तिकत्वयोः समवायिनि पिण्डे दिक्पिण्डसंयोगस्त्वसमवायीति तदसमवायिसंयोगाश्रयतया दिक् तज्ज्ञाने निमित्तम्। साचैका नित्याच ॥४६॥ अथैका चेत्सा कथं तर्हि तस्यां प्राच्यादिनानानामताव्यवहार एकस्यां विरुद्धानां प्राचीत्वादीनां समावेशासंभवादत आह एकापिसा उपाधिभेदात् 'उदयसुमेरुगिरिसान्निध्यासांनिध्यरूपोपाधिभेदवशात्' प्राच्यादिनानानामतां भजते॥

आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥४७॥
शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥४८॥
मनोपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्।
धर्माधर्माश्रयोऽध्यक्षोविशेषगुणयोगतः ॥४९॥

आत्मानं निरूपयति-आत्मेति। ज्ञानाधिकरणत्वमात्मनोलक्षणं नतु ज्ञानवत्त्वं तस्मिन्सर्वदा ज्ञानाभावात् आत्ममनः संयोगादेव ज्ञानोत्पात्तिनियमात् तत्रोपपत्तिमाह इन्द्रियाणां आदिना शरीरस्य च चेतनासाधक आत्मा कुतोहियतः करणं कुठारादिकं सकर्तृकं दृष्टंततश्चक्षुरादीनामिन्द्रियाणामपि करणतया केनापि प्रयोजकेणा-

वश्यं भाव्यमतोयस्तेषां प्रवर्त्तकः सएव 'आत्मपदवाच्यः' ॥४७॥

ननु गौरोहं करोमीति प्रतीतेः शरीर एव रूपकृत्योरनुभवाच्छरीरमेवात्मेतियच्छरीरात्मवादिमतं तद्दूषयति-शरीरस्येति । मृतेषु शरीरेषुव्यभिचारतः चैतन्यवियोगदर्शनाच्छरीरस्यात्मत्वं वक्तुंशक्यमित्यर्थः । दर्शनस्पर्शनादिकं चेतनालिङ्गं तच्चेन्द्रियेष्वेव व्यवस्थितं तस्मादिन्द्रियाण्येवात्मेति इन्द्रियात्मवादिमतं तन्निराकरोति-तथा-त्वमिति । अत्रेन्द्रियाणामिति मध्यमं पदं काकाक्षिवत् तथात्वमुपघातेचेत्युभयत्रान्वेति तथाचेन्द्रियाणां तथात्वं चेतनत्वं चेत्तदा उपघाते चक्षुरादिविनाशे स्मृतिःपूर्वानुभूतार्थस्मरणं कथं भवेत् अनुभवितैवस्मराति स्मरणकाले तदभावात्स्मृतिर्नस्यात्परं सातु दृश्यतेऽतोज्ञायते इन्द्रियेभ्य आत्मा अतिरिक्त इति ॥४८॥

इन्द्रियात्मवादिमते यः स्मरणानुपपत्तिरूपो दोषोऽभिहितः स मनश्चेतनतावादिमते मनसोनित्यतया नावतराति अतोमनएवात्मा इति मन आत्मवादिमतं तन्निरस्यति-मनोपीति । मनोऽपि तथा चेतने न यदि मनश्चेतने स्यात्तदा तस्यैवात्मतया ज्ञानादिमत्त्वं स्यात् तथा सति ज्ञानायौगपद्यानुरोधेन मनसोऽणुत्वस्य वक्ष्यमाणत्वेन महत्त्वाभावात्तस्यैव तावत्प्रत्यक्षं दुष्करं तदीयरूपादिकमिव तद्गतज्ञानादिप्रत्यक्षन्तु सुदूरमपारतम इति मनोतिरिक्त एवात्मा नमन इत्यर्थः ॥

एवमात्मनः शरीरेन्द्रियमनोभिन्नतां प्रदर्श्य वर्णयति-धर्माधर्माश्रय इति । धर्माधर्मौ पुण्यपापे तयोराश्रय आधारः शरीरादिकन्तु न तदधिकरणं शरीरादिविनाशे तद्विनाशापत्त्या शरीरान्तरे

तत्प्रयोज्यसुख दुःख भोगानुत्पत्तिप्रसक्तेः । बुद्ध्यादयोस्य विशेष-गुणावक्ष्यमाणास्तद्योगतस्तेषां संवन्धात्स्वशरीरे प्रत्यक्षः “ अहं जाने-अहं सुखीति” प्रतीयते केवलस्त्वप्रत्यक्ष एव ॥ ४९ ॥

प्रवृत्त्याद्यनुमेयोयं रथगत्येव सारथिः ।
अहंकारस्याश्रयोयं मनोमात्रस्य गोचरः ॥ ५० ॥
विभुर्बुद्ध्यादिगुणवान्न बुद्धिस्तुद्विविधा मता ।
अनुभूतिः स्मृतिश्चस्यादनुभूतिश्चतुर्विधा ॥५१॥
प्रत्यक्षमप्यनुमितिस्तथोपामितिशब्दजे ।
घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२॥
घ्राणस्य गोचरोगन्धोगन्धत्वादिरपिस्मृतः ।
तथा रसोरसज्ञायास्तथाशब्दोपि च श्रुतेः ॥ ५३ ॥

स्वात्मा तु स्वशरीरे अहं जाने अहं सुखीत्यादिप्रत्ययात्प्रत्यक्ष एव परं परात्मा परशरीरे कथं प्रत्येयः परबुद्धेरप्रत्यक्षत्वात् अतः परात्मनोऽपि परशरीरे परिज्ञानप्रकारमाह-प्रवृत्त्यादीति । अयं परात्मा परशरीरे प्रवृत्त्या ( चेष्टया ) अनुमेयः अनुमातुमर्हः कया क इव रथगत्या सारथिरिव अयमर्थः यथा अचेतने रथे गतिं दृष्ट्वा द्रष्टा तदधिष्ठाता सारथिरनुमीयते अस्त्यत्र सारथिरिति तथा परशरीरे प्रयत्नसाध्यां प्रवृत्तिं चेष्टामनुभूय चेष्टागम्यप्रयत्नाश्रयः परात्माप्यनुमीयते तथाच वैशेषिकसूत्रम् “प्रवृत्तिनिवृत्ती प्रत्यगात्मनि दृष्टे परत्र लिङ्गमिति” अ० ३ आ० १ सू० १९ । अहं-

कारस्येति । अहंकारोहमिति प्रत्ययस्तस्याश्रयः मनोमात्रस्य गोचरः मनोभिन्नेन्द्रियाग्राह्यः मानसप्रत्यक्षविषय इत्यर्थः ॥५०॥

विभुः मूर्त्तमात्रसंयोगी बुद्ध्यादिगुणवान् बुद्ध्यादिषट्कमिति कारिकयोक्ता ये चतुर्दशगुणास्तद्विशिष्टः । प्रसङ्गाद्बुद्धिं विभजते बुद्धिस्त्विति । द्वैविध्यं दर्शयति अनुभूतिरिति । अनुभूतिं विभजते अनुभूतिश्चतुर्विधेति * ॥५१॥

चातुर्विध्यं दर्शयति प्रत्यक्षमिति स्पष्टम् । एतासां चतसृणां करणानि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति सूत्रोक्तानि वेदितव्यानि ॥

तत्रोपस्थितत्वात्प्रत्यक्षस्यैव लक्षणमभिधीयते, अनुमित्यादेस्तु तत्तत्प्रकरणे वक्ष्यते, इन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणम् तथाच सूत्रम् " इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकम्" इति, परमिदं जन्यप्रत्यक्षस्यैव दर्शितसूत्रे तथैवोक्तत्वात् जन्याजन्यसाधारणन्तु ज्ञानाकरणकं ज्ञानमिति अनुमित्यादावतिव्याप्तिवारणायविशेषणदलं नित्येच्छादावतिव्याप्तिवारणाय ज्ञानमिति । प्रत्यक्षं विभजते-घ्राणजादीति । घ्राणजमादिपदात् रासनं श्रौत्रं त्वाचं मानसं च गृह्यते ॥५२॥

तावद्घ्राणजमाह गन्धः तद्गता जातिर्गन्धत्वं आदिपदात् सौरभासौरभयोः परिग्रहः घ्राणस्य गोचरः ग्राह्यः प्रत्यक्षविषय इत्यर्थः

---

*अत्र सूत्रम् "कारणायौगपद्यात् कारणक्रमाच्च घटपटादिबुद्धीनां क्रमो न हेतुफलभावात्" इति । कणादमते द्विविधा प्रत्यक्षानुमिति भेदात् ।

येनेन्द्रियेण यद्वस्तुगृह्यते तेनैवेन्द्रियेण तन्निष्ठाजातिस्तदभावश्चापि गृह्यत इति नियमात् । रासनमाह तथेति । तथा रस इति रसत्वादिसहितः रसनाया गोचर इत्यत्रापि संबध्यते । श्रौत्रमाह तथेति । तथा शब्दः शब्दत्वादिसहितः श्रुतेः श्रोत्रस्य ॥ ५३ ॥

उद्भूतरूपं नयनस्य गोचरः ।
द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ॥
विभागसंयोगपरापरत्व-
स्नेहद्रवत्वं परिमाणयुक्तम् ॥ ५४ ॥
१ क्रिया जातिर्योग्यवृत्तिः समवायोपि तादृशः ।
गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥५५॥

चाक्षुषमाह-उद्भूतरूपमिति । तप्तवालुकास्थतेजोरूपं चक्षुषा न गृह्यते एतदर्थमुद्भूतेति विशेषणम् । तद्वन्ति उद्भूतरूपवन्ति ॥५४॥

भूतादिकं यदयोग्यं तद्वृत्तिभूतत्वादिजातेरगोचरत्वादुक्तं योग्यवृत्तिरिति तादृशो योग्यवृत्ति नयनस्य गोचर इति प्रत्येकं संबध्यते चक्षुषोयोग्यत्वञ्चालोकोद्भूतरूपयोः समवधानादित्याह गृह्णातीति चाक्षुषे सहकारिकारणम् ॥ ५५ ॥

---

नोट १-यश्च केषु चित्पु स्तकेषु 'क्रियां जातिं' योग्यवृत्तिं समवायं च तादृशम् इति प्रत्येकं द्वितीयान्तः पाठोदृश्यते सतुयुक्तोन 'नयनस्य गोचर' इत्यनेनानन्वयापत्तेः । यद्यपि प्रथमान्तपाठे ऽपि क्रियादीनाम कर्मतया 'गृह्णाती' त्यनेनान्वयो दुर्घटस्तथापि ' गृह्णाती' त्यस्यनिराकाङ्क्षत्वप्रातिपत्तये 'एतान्' इति 'पदार्थान्' इति च पदद्वयमध्याहर्त्तव्यं तथासत्यभिमतार्थलाभान्नकाश्चिद्दोषः ।

उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः
रूपान्यच्चक्षुषोयोग्यं रूपमत्रापि कारणम् ॥ ५६ ॥

द्रव्याध्यक्षे त्वचोयोगोमनसा ज्ञानकारणम् ।
मनोग्राह्यं सुखं दुःखमिच्छाद्वेषोमतिः कृतिः॥५७॥

त्वाचं दर्शयति-उद्भूतेति। उद्भूतस्पर्शवत् उद्भूतस्पर्शाधिकरणं द्रव्यं किञ्च सोपि उद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितस्त्वचो गोचरः रूपान्यादिति। रूपं रूपत्वञ्च एतदुभयभिन्नं यच्चक्षुषोयोग्यं पृथक्त्वादिकं तत्त्वचोऽपि प्रत्यक्षम्। किञ्च अत्रापि त्वाचेऽपि चाक्षुषे इव रूपं कारणम्। अत एवैतन्मते रूपाभावेण वायुरनुमेय एव, नव्यनैयायिकमते तु स्पार्शने स्पर्शः कारणं नतु रूपमतस्तन्मते वायुरपि प्रत्यक्षः ॥ ५६ ॥

अथ ज्ञानसामान्ये सहकारिकारणमाह-द्रव्याध्यक्षइति, मनसा सहत्वचोयोगोज्ञानमात्रे कारणम्। अतएवमनसः पुरीतत्प्रवेशसमये त्वगिन्द्रियोगेन ज्ञानसामान्याभावः। मानसप्रत्यक्षमाह-मनोग्राह्यमिति मतिर्ज्ञानं कृतिर्यत्नः एव सुखत्वादि, एवमात्मापि मानसप्रत्यक्ष विषयोबोध्यः ॥ ५७ ॥

ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।
महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥

विषयेन्द्रियसम्बन्धोव्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तुसंयोगात् संयुक्तसमवायतः ॥ ५९ ॥

द्रव्येषु समवेतानां तथातत्समवायतः ।
तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
विशेषणतया तद्वदभवानां ग्रहोभवेत् ॥ ६१ ॥
यादिस्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६२ ॥

ज्ञानं मनोग्राह्यमित्युक्तं तत्र विशेषमाह-ज्ञानं यदिति यन्नि-र्विकल्पाख्यं प्रकारतासंसर्गताशून्यं निर्विकल्पाभिधानं ज्ञानं तच्चक्षुरिन्द्रियजानितेनायं घट इत्याकारकेण स्वकार्येण विशिष्टज्ञानेनानुमीयते इत्यतीन्द्रियं मानसप्रत्यक्षविषयोनेत्यर्थः । सत्यप्यालोकोद्भूतरूपयोः सम्बन्धेपरमाण्वादेरग्रहेकोहेतुरत आह- महत्त्वमिति। षड्विधे घ्राणजादिप्रत्यक्षे महत्त्वं हेतुरतस्तदभावादेव न परमाण्वादेर्ग्रहः तत्र करणमाह-इन्द्रियमिति । घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि मनश्च करणम् ॥ ५८ ॥

तत्र कोव्यापारः कतिविधश्च स इत्यपेक्षायामाह-विषयेति विषयेन्द्रियसंबंधोव्यापारः विषयोघटादिः इन्द्रियं चक्षुरादि एतयोः यः सम्बन्धः संयोगादिः सोत्र व्यापारः सन्निकर्षः षड्विधं सन्निकर्षमुदाहरणद्वारा दर्शयति-द्रव्यग्रहइति। द्रव्यग्रहः द्रव्यप्रत्यक्षं संयोगाद इन्द्रियसंयोगसन्निकर्षाद्भवति। द्रव्येषु घटादिषु समवेतानां रूपादीनां संयुक्तसमवायतः सन्निकर्षाद, चक्षुः संयुक्ते घटे रूपादीनां

समवायात् । तत्रापि द्रव्यसमवेतरूपादिष्वपि समवेतानां रूपत्वादीनां ग्रहः तत्समवायतः संयुक्तसमवेतसमवायतः चक्षुः संयुक्ते घटे रूपादयः समवेतास्तत्र रूपत्वादीनां समवायात् । शब्दस्य समवायतः शब्दस्य श्रोत्ररूप आकाशे समवेतत्वात् ॥ ५९, ६० ॥

तद्वृत्तीनां शब्दवृत्तीनां शब्दत्वादीनां समवेतसमवायेन तु ग्रहः प्रत्यक्षं श्रोत्रसमवेते शब्दे तेषां समवायात् । तथा अभावानां भूतलाद्याश्रितानां घटाद्यभावानां विशेषणतया विशेषणतासन्निकर्षेण ग्रहः । भूतले घटोनेत्यत्र भूतलं विशेषणं घटाभावो विशेष्यम् । चक्षुः सम्बद्धविशेष्यतासन्निकर्षः।घटाभाववद्भूतलमित्यत्र घटाभावो विशेषणं भूतलं विशेष्यं चक्षुः सम्बद्ध विशेषणतासन्निकर्षः ॥६१॥ अत्राशङ्कते भूतले घटाभाव इव स्तम्भे पिशाचाभावश्चक्षुषा कुतोन गृह्यते तत्राह यदीति । यदि प्रतियोगो स्यात्तदा उपलभ्येत इत्येवं यत्र प्रसज्यते प्रयोजयितुं शक्यते तत्रैवाभावज्ञानं भवति नान्यत्र तथाच भूतले यद्यत्र घटःस्यात्तदा उपलभ्येत इत्यापादनसम्भवात्तदभावप्रत्यक्षं स्तम्भे तु यद्यत्र पिशाचः स्यात्तदोपलभ्येतेत्यापादयितुं न शक्यते पिशाचस्यातीन्द्रियत्वात् सत्त्वेऽप्यनुपलम्भसंभवादिति न तदभावप्रत्यक्षम् । एवं समवायप्रत्यक्षेऽपि विशेषणता सन्निकर्षः नीलो घट इति वाक्यान्नीलरूपविशिष्टो घट इति शाब्दबोधे नीलघटयोर्वैशिष्ट्यं नाम समवायोऽपि विशेषणतयैव भासते इति तत्रापि विशेषणतासन्निकर्षः ॥ ६२ ॥

**अलौकिकः सन्निकर्षस्त्रिविधः परिकीर्त्तितः ।**

सामान्यलक्षणा ज्ञानलक्षणा योगजस्तथा ॥६३॥
आसत्तिराश्रयाणान्तु सामान्यज्ञानमिष्यते ।
तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥

प्रत्यक्षं लौकिकालौकभेदेन द्विविधं तत्र लौकिकप्रत्यक्षे षड् विधं सन्निकर्षमभिधायाऽलौकिकप्रत्यक्षे त्रिविधं तमाह अलौकिक इति ॥ ६३ ॥ तत्रादिममाह आसत्तिरिति । सामान्यविषयकं तदाश्रयणामासत्तिः सन्निकर्षः यत्रैकं घटमवलोक्य सकलघटानां ज्ञानं तत्र घटत्वसामान्यज्ञानसन्निकर्षेण सर्वेषां घटत्ववतां बोधः । अथ सामान्यमेव सन्निकर्षोऽस्तु अलं तज्ज्ञानेनेत्यत्राह तत्र घटत्वद-र्शनानन्तरं घटत्वस्मरणे सति सर्वेषां घटत्वतां भानं न स्यात् घट-रूपसामान्यस्य तदानीं तत्राभावात् तज्ज्ञानाङ्गीकर्त्तुर्मम मते तु तज्ज्ञानस्य तदानीमपि सत्त्वात् उपपद्यते एव तत् । यदि सामा-न्यज्ञानमीदृशमोजास्वि तर्हि तेन सामान्यज्ञानेन स्वाश्रयाणामलौ-किकं चाक्षुषं चक्षुः संयोगं विनाऽपि कुतो न जन्यत अत आह-तदिन्द्रियजेति । यस्य सामान्यविषयकं ज्ञानमपेक्ष्यते तस्य घटादेः प्रत्यक्षकरणं यदिन्द्रियं चक्षुरादिकं तज्जस्तदिन्द्रियजनितोयस्तद्ध-र्मबोधः सामान्यज्ञानं तस्य सामग्री चक्षुरालोकसंयोगादिका तत्रा पेक्ष्यत एव तथा च तदभावान्न तत्र तत्संभव इति भावः ॥६४॥

विषयी यस्य तस्यैव व्यापारोज्ञानलक्षणा ।
योगजोद्विविधः प्रोक्तोयुक्तयुञ्जानभेदतः ॥६५॥
युक्तस्य सर्वदाभानं चिन्तासहकृतोऽपरः ।

द्वितीयं सन्निकर्षमाह-विषयीति । स सन्निकर्षः यस्य विषयी यद्विषयकं ज्ञानमित्यर्थः तस्यैव स्वविषयस्यैव व्यापारः यत्र चक्षुषा चन्दनं दृष्ट्वा सुरभिचन्दनमितिज्ञायते तत्र चन्दनज्ञानं लौकिकसंयोगाह्वसन्निकर्षेण, सौरभत्वभानं तु स्मरणात्मकं ज्ञानलक्षणसन्निकर्षेणैव गन्धेघ्राणसंयुक्तसमवायस्य लौकिकसन्निकर्षस्य तत्र तदानीमभावादितिभावः । तृतीयं विभजते योगज इति । युक्तयुञ्जानरूपसंज्ञाभेदेन योगिनां द्वैविध्यात् योगजसन्निकर्षोऽपि द्विविधः । एतदेवाह युक्तस्य सिद्धयोगस्य योगजधर्मेण अव्याहतगतिज्ञानेन सर्वविषयं सर्वदाभानं अपरोयुञ्जानः योगसाधनतत्परस्तु चिन्तासहकृतः चिन्तारूपं सहकारिणमपेक्षते समाधिस्थ एव सर्वं पश्यति नतु तद्रहितोपीति भावः ॥ ६५ ॥

॥ इति प्रत्यक्षखण्डव्याख्या ॥

व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥६६॥
अनुमायां ज्ञायमानं लिङ्गन्तु करणं नहि ।
अनागतादिलिंगेन नस्यादनुमितिस्तदा ॥६७॥

अनुमितिं निरूपयाति-व्यापारस्त्विति । वन्ह्यनुमित्सायां सत्यां पक्षे पर्वते तल्लिङ्गं धूमं दृष्ट्वा यत्र धूमस्तत्राग्निरिति वन्हिधूमयोः शतकृत्वः साहचर्य्यानुभवलक्षणां व्याप्तिं स्मृत्वा वन्हिव्याप्यधूमवानयमिति परामर्शोत्तरं यद्वन्हिमानयमिति ज्ञानं जायेत सानुमितिः । तत्र करणादि दर्शयति-व्यापार इइ । अनुमायां अनुमितौ परामर्शोव्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमिति-

ज्ञानजनकतया व्यापारः, व्याप्तिधीर्व्याप्तिज्ञानं स्वीयपरामर्शरूप-व्यापारद्वारा व्यापारवदसाधारणं कारणं करणमिति लक्षणलक्षित-त्वेनानुमितिकारणत्वात्करणम् । ६६ । अत्रत्यं प्राचीनमतं निरस्यति ज्ञायमानमिति । ज्ञायमानं ज्ञानगोचरं धूमादिकं लिङ्गं करणं न तत्र हेतुमाह-अनागतादिना । अनागतेन भविष्यता आदिपदात् भूतेन च लिङ्गेन धूमेन अनुमितिर्वन्हिमत्त्वज्ञानं न स्यात्तदा अनुमितिकरणकाले ज्ञायमानलिङ्गाभावात् धूमदर्शना-भावादित्यर्थः ॥ ६७ ॥

व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।
व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः॥६८॥
अथवा हेतुमन्निष्ठविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥६९॥

परामर्शं लक्षयति-व्याप्यस्येति व्याप्यस्य व्याप्तिविशिष्टस्य लिङ्गस्य हेतोः पक्षवृत्तित्वधीः पक्षवृत्तिताज्ञानमर्थात् व्याप्तिविशिष्ट पक्षधर्मताज्ञानं स परामर्शः यथा पर्वतोवन्हिमान् धूमादित्यत्र यत्र धूमस्तत्राग्निरिति वन्हिव्याप्यत्वविशिष्टो यो धूमस्तस्य पर्वतवृत्तिता-ज्ञानं वन्हिव्याप्यधूमवानयमित्यात्मकं ज्ञानं वन्हिमानयमित्यनुमितौ व्यापार उक्तः । व्याप्तिं लक्षयति-व्याप्तिरिति । साधयितुं योग्यं साध्यं तदस्यास्मिन्वास्तीति साध्यवान् साध्यवतोन्यः साध्यवद-न्यस्तस्मिन् साध्यवदन्यस्मिन्नसम्बन्धोऽवृत्तित्वं हेतोर्व्याप्तिस्तथा-च साध्यवदन्यनिरूपितवृत्तित्वाभावो व्याप्तिरिति फलितं पर्वतो

वन्हिमान्धूमादित्यत्र साध्यंवन्हिः साध्यवान् पर्वतः तदन्यो जल ह्रदादिः तत्र वृत्तित्वं हेतोर्धूमस्येति लक्ष्ये लक्षणसमन्वयः धूमवान्व-न्हेरित्यत्र नातिव्याप्तिः साध्यवतः पर्वतादन्यास्मिन् तप्तायः पिण्डे धूमस्य वृत्तेः, इदमपिलक्षणं "घटोज्ञेयोऽभिधेयत्वादि" तिलक्ष्ये साध्यवतः ज्ञेयवतः सर्वजगतोऽन्यस्याप्रसिद्धेरव्याप्नोतीत्यतः प्रका-रान्तरेण तां लक्षयति ॥ ६८ ॥

अथवेति—हेतुमति साधनवति निष्ठा स्थितिर्यस्य एतादृशो यो विरहोऽत्यन्ताभावस्तस्याप्रतियोगी अविरोधी यस्तेन साध्येन सह हेतोः एकाधिकरण्यं सामानाधिकरण्यं समानाश्रयत्वमितियावत् व्याप्तिरुच्यते तथाच हेत्वधिकरणवृत्त्यभावाप्रतियोगिसाध्यसमा-नाधिकरण्यं व्याप्तिरितिलक्षणं फलितम् 'पर्वतो वन्हिमान् धूमादि' त्यत्र हेतुर्धूमस्तदधिकरणं पर्वतः तद्वृत्त्यभावोवन्ह्यभावस्तु धर्तुं न शक्यते यतस्तादृशाभावप्रतियोगि न भवतीति ध्रियते कश्चित्तदन्यो ऽभावोघटाभावस्तत्प्रतियोगीघटोऽप्रतियोगिसाध्यं वन्हिस्तेनवन्हि ना सह हेतोर्धूमस्य सामानाधिकरण्यमस्त्येवेति लक्ष्ये लक्षणसमन्वयः धूमवान्वन्हेरित्यत्र हेतुर्वन्हिस्तदाधिकरणं तप्तायःपिण्डः तद्वृत्त्यभा-वोधूमात्यन्ताभावस्तत्प्रतियोगयेवसाध्यमप्रतियोगिनास्तीति नाति-व्याप्तिः घटोज्ञेयोऽभिधेयत्वादित्यत्र अभिधेयत्वाधिकरणवृत्त्यभावा-प्रतियोगित्वं ज्ञेयत्वस्येति नाव्याप्तिः ॥ ६९ ॥

सिषाधयिषया शून्या सिद्धिर्यत्र नविद्यते ।
सपक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥७०॥

पक्षं लक्षयति-सिषाधयिषयेति । साधयितुमिच्छासिषाधयिषा अनुमित्सेत्यर्थः तया शून्या रहिता तदभावविशिष्टा सिद्धिः साध्य-निश्चयः यत्र न तिष्ठति स पक्षः तत्र पक्षे हेतोर्दृष्टिचित्वज्ञानात्परामर्शा-दनुमितिः स्यात् । तथाच सिषाधयिषाविरहाविशिष्टसिद्ध्यभावत्वं पक्षताया लक्षणम् । सिषाधयिषाविरहविशिष्टसिद्ध्यभावत्वं पक्षत्वम् साध्यसिद्धिरनुमितिं प्रतिबध्नाति इति तदभावादरः साध्यनिश्चये सत्यपि सिषाधयिषासत्त्वेऽनुमितिर्जायत इति सिषाधयिषा सिद्ध भावोवा न पक्षतेति सिद्धान्तोनिष्क्रान्तः ॥ ७० ॥

## अनैकान्तोविरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
## कालात्ययापदिष्टश्चहेत्वभासास्तु पञ्चधा ॥७१॥

व्याप्त्यादिविशिष्टो हेतुः सद्धेतुस्तद्विपरीतस्त्वसद्धेतुः स चाहे तुरपिहेतुवदाभासमानोहेत्वाभास इत्युच्यते तथा चैकसम्बन्धिज्ञानम-परसम्बन्धिस्मारकमितिन्यायात्सद्धेतुज्ञानमसद्धेतुस्मारकमिति सद्धेतु निरूपणान्तरमसद्धेतून् हेत्वाभासान्निरूपयति-अनैकान्तइति। इहसा मान्यंतद्विशेषाननभिधाय वादिविप्रतिपत्तेरतिव्याप्तिभिया वक्तुमश-क्यमितिविशेषानेव तावन्निर्दिशति अनैकान्त इति । अनैकान्तःसव्य भिचारः विरुद्धासिद्धौ प्रसिद्धौ प्रतिपक्षितः सत्प्रतिपक्षः अयञ्चन्याये प्रकरणसम इत्युच्यते । कालात्ययापदिष्टः कालातीतोबाध इति प्रसिद्धः, इत्येवंहेत्वाभासाः पञ्च तथाचोक्तं चिन्तामणिकृता तेच सव्य भिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्चेतिएतेषांसामान्यलक्षणंतु अनुमितितत्करणान्यतरानिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकताशालि-यथार्थज्ञानविषयत्वं बोध्यम् ॥ ७१ ॥

आद्यः साधारणस्तु स्यादसाधारणकोपरः ।
तथैवानुपसंहारी त्रिधानैकान्तिकोभवेत् ॥ ७२ ॥
यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।
यस्तूभयस्माद्व्यावृत्तः सचासाधारणोमतः ॥ ७३ ॥
तथैवाऽनुपसंहारी केवलान्वयिपक्षिकः ।

तत्राद्यं त्रिधा विभजते आद्य इति स्पष्टम् ॥७२॥ तत्र साधारणानैकान्तिकं लक्षयति-य इति। सपक्षः साध्यवान् तथाच यो हेतुः सपक्षे (साध्यवति) विपक्षे (साध्याभाववति च) भवेत् (वर्त्तेत) स साधारणः साधारणनैकान्तिक इत्यर्थ एवञ्च सपक्षविपक्षवृत्तित्वं साधारणानैकान्तिकस्य लक्षणम् अस्य लक्ष्ये समन्वयोयथा पर्वतोवान्हिमान् प्रमेयत्वस्य जगन्मात्रव्यापितया सपक्षे महानसादौ विपक्षे ह्रदादावपि च वर्त्तमानत्वात् साधारणत्वम् । असाधारणानैकान्तिकं-लक्षयति। यस्त्विति इह सपक्षः निश्चितसाध्यवान् विपक्षो निश्चितसाध्याभाववान् बोध्यःतथाच सपक्षात् ।निश्चितसाध्याधिकरणात् विपक्षात् निश्चितसाध्याभावाधिकरणात् व्यावृत्तोविनिवृत्तः केवलपक्षमात्रवृत्तिर्योहेतुः सोऽसाधारणः। एवञ्च सपक्षविपक्षव्यावृत्तत्वमसाधारणाऽनैकान्तिकत्वं लक्ष्ये लक्षणसमन्वयो यथा शब्दोनित्यः शब्दत्वादित्यत्र शब्दत्वं नित्येभ्यः परमाण्वाकाशादिभ्यः अनित्येभ्यो घटादिभ्यश्च व्यावृत्तइत्यसावसाधारणः ॥ ७३ ॥

अनुपसंहारिणं लक्षयति-तथैवेति। केवलमन्वयी अन्वयव्याप्तिमान् पक्षोयस्य स हेतुरनुपसंहारी तथाच केवलान्वयिधर्मावच्छिन्न पक्षकत्वमनुपसंहारिणोलक्षणम्। उदाहरणं यथा सर्वमभिधेयं प्रमेयत्वात् इत्यत्र पक्षस्य सर्वपदार्थस्यकेवलान्वयित्वात्प्रमेयत्वस्यानुपसंहारित्वम्॥

यः साध्यवति नैवास्ति स विरुद्धउदाहृतः ॥७४॥
आश्रयासिद्धिराद्यास्यात्स्वरूपासिद्धिरप्यथ ।
व्याप्यात्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥७५॥
पक्षासिद्धिर्यत्रपक्षोभवेन्मणिमयोगिरिः ।
ह्रदोद्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा॥ ७६ ॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत्।
विरुद्धयोः परामर्शो हेत्वोः सत्प्रतिपक्षता ॥७७॥

द्वितीयं लक्षयाति य इति। योहेतुः साध्यवति साध्याधिकरणे नैवास्ति नवर्त्तते स विरुद्धः तथाच साध्यव्यापकाभावप्रतियोगित्वं विरुद्धस्य लक्षणं लक्ष्ये लक्षणसमन्वयोयथा घटोनित्यः कृतकत्वात् इत्यत्र साध्यस्य नित्यत्वस्य व्यापकोयोऽभावः कृतकत्वाभावः तत्प्रतियोगित्वं कृतकत्वस्येति कृतकत्वं विरुद्धम्॥ ७४ ॥

असिद्धं लक्षयितुकामस्तावदसिद्धिं विभजते-आश्रयासिद्धिरितिस्पष्टम्॥ ७५ ॥

आद्यामुदाहरति पक्षासिद्धिरिति। यत्र यस्मिन् हेतौ सति पक्षः हेत्वधिकरणं मणिमयोगिरिः पर्वतः स्यात् तत्र साधनाश्रयस्य तादृशपक्षस्यासिद्धेरभावात्पक्षसिद्ध्यपरनाम्नी आश्रयासिद्धिर्बोध्या तथाच पक्षे पक्षतावच्छेदकस्याभाव आश्रयासिद्धेर्लक्षणम्। यथा काञ्चनमयः पर्वतोवन्हिमान् इत्यत्र धूमाश्रयस्य काञ्चनमयपर्वतस्याभाव आश्रयासिद्धिः। द्वितीयांस्वरूपासिद्धिमुदाहरति ह्रदोद्रव्यं धूमवत्त्वादित्यत्र पक्षे ह्रदे धूमवत्त्वमेवनास्तीति पक्षे हेत्वभावः स्वरूपासिद्धेर्लक्षणम् ॥ ७६ ॥

तृतीयां दर्शयति-व्याप्यत्वासिद्धिरिति। पर्वतोवन्हिमान् नीलधूमादित्यत्र सम्भवति लघुनिधर्मे गुरुधर्मस्यानवच्छेदकत्वमितिन्यायाद्धूमत्वंलाघवाद्व्याप्यतावच्छेदकमस्ति नीलधूमत्वं तु गौरवान्नव्याप्यतावच्छेदकमेवं विशेषणान्तर घटितमपितन्न इयमेव व्याप्यत्वासिद्धिः एवञ्च हेतौ हेतुतावच्छेदकस्याभावः व्यर्थविशेषणघटितं वा हेतुतावच्छेदकं व्याप्यत्वासिद्धेर्लक्षणम्। तदन्यतमत्वमसिद्धत्वम्। सत्प्रतिपक्षं चतुर्थं हेत्वाभासं लक्षयति विरुद्धयोरिति। एकदेशावृत्तित्वंविरोधः तद्विशिष्टयोः साध्यसाध्याभावयोः साधकौ यौ हेतू तयोः साध्यता परामर्शःपक्षवृत्तित्वं सत्प्रतिपक्षिता सत्प्रतिपक्षः तथा च विरुद्धद्वय साधकहेतुद्वयपरामर्शत्वं सत्प्रतिपक्षस्य लक्षणम्। यथाशब्दोनित्यः श्रावणत्वात् शब्दत्ववदिति। शब्दोऽनित्यःकार्य्यत्वात्घटवदिति। अत्र मिथोविरुद्धयोर्नित्यानित्यत्वयोः साधकौ यौ हेतू शब्दत्वघटत्वे तयोः परामर्शः पक्षवृत्तित्वं शब्दवृत्तित्वं शब्दत्व-

वत्त्वात्किमयं शब्दोनित्यं उतवा कार्य्यत्ववत्त्वादनित्य इति भावनं सत्प्रतिपक्षः तथाचोक्तं न्यायभाष्यकृद्भिर्यस्मात्प्रकरणचिन्ता स निर्णयार्थमुपदिष्टः प्रकरणसमः ॥ ७७ ॥

साध्यशून्योयत्र पक्षस्त्वसौ बाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥

पञ्चमहेत्वाभासमाह साध्यशून्य इति । यत्र हेतौ पक्षः साध्यशून्यः येन केनापि सम्बन्धेन न यद्वृत्तिरित्यर्थः । असौ हेतुर्बाधः कर्मव्युत्पत्त्याबाधितः । अथवा यत्र हेतौ साध्यशून्यः पक्षस्तत्रासौ साध्याभाववान्पक्षोबाधोदोष उदाहृतः कस्तादृशः पक्ष इत्याकाङ्क्षायामाहउत्पत्तिकालीनेति । यत्र यस्मिन्नुत्पत्तिकालीनघटोगन्धादिः साध्यते इत्युत्तरवाक्यीयतया तच्छब्दप्रयोगानपेक्षतयैवान्वयः । तथाच साध्याभावपक्षकत्वं बाधस्य लक्षणम् । यथा उत्पत्तिकालीनो घटोगन्धवान् पृथिवीत्वादित्यत्रोत्पत्तिक्षणावच्छेदेन घटोगन्धाभाववान्बाधः तत्र कालावच्छेदेन घटोगन्धाभाववांश्च प्रथमक्षणे निर्गुणं द्रव्यमुत्पद्यत इति सिद्धान्तमनुसृत्य गृह्यत इति दिक् ॥ ७८ ॥

॥ इति अनुमानखण्डव्याख्या ॥

ग्रामीणस्य प्रथमतः पश्यतोगवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥७९॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥ ८० ॥

उपमितिं निरूपयति-ग्रामीणस्येति। ग्रामीणः कोऽपि गवयशब्दार्थमजानन् गवयः कीदृगिति कञ्चिदारण्यकं पृष्टवान् तस्माच्च गोसदृशोगवय इति श्रुत्वा भूयोभूयस्तदेव स्मरन्वनं गतः तत्रास्य गोसदृशपशुं दृष्ट्वा गोसदृशोगवयोभवतीति पूर्वश्रुतवाक्यार्थं स्मृत्वा चायमेव गवयपदवाच्य इति या धीर्जायते सोपमितिः तथाच सादृश्यज्ञानजन्यज्ञानत्वमुपमितेर्लक्षणं यद्वा संज्ञासंज्ञिसम्बन्धिज्ञानत्वमुपमितिः तत्र करणव्यापारफलान्याह ग्रामीणस्येति। ग्रामीणस्य ग्रामवासिनः ततः एवारण्यकपशुमपश्यतः प्रथमत इत्यनेन सकृदेव पुनर्दर्शनेतु न सेति सूच्यते सादृश्यधीः सदृशोयमितिज्ञानं अतिदेशवाक्यार्थस्मरणं द्वारीकृत्वोपमितिहेतुत्वात्करणम् ।७९। एकत्र दृष्टस्य श्रुतस्य वा परत्र योगोतिदेशः यथारण्यकस्य समीपे श्रुतस्य गोसदृशोगवय इति वाक्यार्थस्यारण्ये तादृशवन्ये तथायमिति योजनमतिदेशः तस्यातिदेशस्य एकत्र श्रुतस्यापरत्रयोजितस्येत्यर्थः वाक्यार्थस्य 'गोसदृशोगवय इत्यादिकस्य' स्मृतिःस्मरणं सादृश्यज्ञानजन्यत्वे सति सादृश्यज्ञानजन्योपमितिज्ञानजनकत्वात् 'तज्जन्यत्वे सति तज्जन्यजनकोव्यापार इति लक्षणाद्व्यापारः गवयादिपदानां शक्तिधीः शक्तिज्ञानं गवयपदं गोसादृश्यविशिष्टवाचकमितिज्ञानं फलम् ॥ ८० ॥

॥ इत्युपमानखण्डनिरूपणम् ॥

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥८१॥
लक्षणा शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः ।

शब्दानुभूतिमाह पदज्ञानमिति। गामानयेत्याकर्णयतोगृहीत-पदपदार्थसम्बन्धस्य सुधियः तत्तत्पदश्रवणात्तत्तदर्थोपस्थितौ गोकर्मकानयनानुकूलकृतिमांस्त्वंभवेतिसमुदितार्थबोधोजायते स शाब्द-बोधः। तत्रकरणव्यापारफलान्याह पदज्ञानमिति तत्रशाब्दप्रमितौ पदज्ञानंपदानुभवः करणं पदार्थधीः पदार्थज्ञानं द्वारं व्यापारः शक्तिधीः शक्तिः पदस्य पदार्थेन सम्बन्धः यथैतत्पदमेतदर्थवाचकं वा एतद्वाचकस्यैतदर्थोवाच्य इत्याकारकः तस्याधीर्ज्ञानं सहकारिणी सहकारि शक्तिज्ञानं बिना पदानुभवेऽपि पदार्थास्मरणात् युक्तमेतत् अगृहीतस्वार्थशक्तिकस्य घटपदस्याऽसकृच्छ्रवणेऽपितदर्थ बोधानुत्पतेः शाब्दबोधोवाक्यार्थज्ञानं दर्शितस्वरूपं फलम् ॥ ८१ ॥

शब्दस्यार्थबोधकौ मुख्योऽमुख्यश्च द्वौव्यापारौ तत्र मुख्ये ऽन्वयानुपपत्तेरमुख्योगृह्यते मुख्यःशक्तिर्याचाभिधेत्यपिशब्द्यते अमुख्यः लक्षणा तां लक्षयति-लक्षणेति। शक्यस्य शक्त्योपस्थापितस्यार्थस्य सम्बन्धस्तत्सम्बन्धिनि सम्बन्धः मुख्याख्यावाचकपदस्यामुख्यार्थे वृत्तिर्लक्षणा यथा गङ्गायां घोष इत्यत्र गङ्गापदशक्यार्थे स्वप्रवाहे घोषपदशक्यार्थस्य निवासस्यान्वयानुपपत्तेः प्रवाहेसम्बन्धस्य तीरे गृहीतत्वात्तीरे लक्षणा एवं श्वेतो धावतीत्यत्र श्वेतपदस्य श्वेतगुणाविशिष्टेसा। अन्वयानुपपत्तिस्तात्पर्यानुपपत्तिश्च लक्षणाबीजमिति प्राञ्चः। यष्टीः प्रवेशयेत्पदावन्वयानुपपत्तेरभावात्सर्वत्रानुगता तात्पर्यानुपपत्तिरेव वीजमितिनव्याः। एतदनुसन्धायैव मूले केवलं तात्पर्यानुपपत्तिरूपं वीजं निवेशितम्। सा पुनर्लक्षणा

द्विविधा जहत्स्वार्थाऽजहत्स्वार्था च गंगायां घोषः इत्यादावाद्या काकेभ्योदधिरक्ष्यतामित्यादौ च द्वितीया ॥

१
आसत्तियोग्यताकाङ्क्षातात्पर्य्यज्ञानमिष्यते ॥८२॥
कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते ।
पदार्थे तत्र तद्वत्तायोग्यता परिकीर्त्तिता ॥ ८३ ॥
यत्पदेन विना यस्याननुभावकता भवेत् ।
आकाङ्क्षा वक्तुरिच्छा तु तात्पर्य्यं परिकीर्त्तितम् । ८४

शाब्दबोधे सहकारिकारणमाह-आसत्तीति। आसत्त्यादितात्पर्य पर्यन्तानां पदानां द्वन्द्वस्तदन्ते श्रूयमाणस्य ज्ञानपदस्य प्रत्येकं संबंधः तथाच आसत्तिज्ञानं योग्यताज्ञानं आकांक्षाज्ञानं तात्पर्यज्ञानं च कारणं सहकारिकारणमित्यर्थः।८२। आसत्तिं लक्षयति-सन्निधानं त्विति। वाक्यार्थबोधे भासमानार्थसम्बन्धयोः पदयोः सन्निधानम व्यवधानमासत्तिः यथा गिरिरग्निमान्भुक्तं देवदत्तेन गिरिभुक्तम ग्निमान्देव दत्तेनेत्यादौच गिरिपदाग्निमत्पदयोर्मध्येभुक्तपदेन व्यवधा नान्नासत्तिस्ततएव नानयोः शाब्दबोधःसन्निधानमितिवदताऽसंनिधाने प्रहरादिविलम्बेनोच्चारणे आसत्त्यभावेन शाब्दबोधाभावः सूचितः योग्यतामाह। पदार्थइति। तत्र तस्मिन्प्रक्रान्ते पदार्थे तद्वत्ता

१ क्वचित् 'आसत्ति' इति व्यस्तं पदं तत्र स्वरूपसती सा कारणं नतुतज्ज्ञानम् ।

पदान्तरार्थप्रतियोगिकोविवक्षितसम्बन्धोयोग्यता तथा पयसा सिञ्चति इत्यत्र सेके पयसः करणतया सम्बन्धः। वन्हिना सिञ्चतीत्यत्र न योग्यता वन्हेः सेककरणत्वाभावात् द्रवद्रव्यक्षरणस्यैव सेकपदार्थत्वाद्वन्हौ च तद्भावादितिभाव' ॥ ८३ ॥

आकाङ्क्षां निर्वक्ति—यत्पदेनेति। येन पदेन विना यस्य पदस्य अननुभावकता अन्वयाननुभावकत्वमर्थास्मारकत्वं भवेत् तेन सहतस्याकाङ्क्षा यथा घटमिति कारकपदं आनयेतिक्रियापदं विना नान्वयबोधं जनयतीति तेन तस्याकाङ्क्षा। गौरश्वः पुरुषोहस्तीत्यत्र नाकाङ्क्षा। तात्पर्यमाह-वक्तुरिति। वक्तुरुच्चारयितुरिच्छा तात्पर्य्यं तच्च नानार्थस्थल उपयुज्यते प्रकरणादिनाचोत्पद्यते यथा सैन्धवमानये त्यत्रभोजनप्रकरणे सैन्धवशब्दात् लवणस्य, यात्राप्रकणे च तस्मादेवाश्वस्य बोध उत्पद्यते। इति चतुर्विधानुभूतिनिरूपणम्॥८४

अथ प्रसङ्गात् संक्षेपेण स्मृतिर्निरूप्यते इयं च मूलकारेण नोक्ता किन्तूपयोगितया मयैवोपक्षिप्ता अनुभूतिजन्यंज्ञानं स्मृतिः अनुभूतिध्वंसेऽतिव्याप्तिवारणाय विशेष्यदलम् । अनुभूतावतिव्याप्तिवारणाय विशेषणदलं स्मृतौ संस्कारोव्यापार उद्बोधकास्तत्सहकारिण आत्म मनः संयोगोऽसमवायिकारणं सुस्मूर्षाप्रणिधानादिकं निमित्तकारणं तथाच वैशेषिकसूत्रं "आत्ममनसोः संयोगविशेषात् संस्काराच्चस्मृतिः "तथा स्वप्नः" ९ अ० १ आ० ६ । ७ सूत्रम् ।

साक्षात्कारे सुखादीनां करणं मन उच्यते ।
अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥८५॥

अथ नवमद्रव्यं मनोनिरूपयति साक्षात्कार इति । सुख-दुःखादि प्रत्यक्षसाधनमिन्द्रियं मनः तस्याणुत्वे प्रमाणमाह-अयौगपद्यादिति । ज्ञानानां चाक्षुषादीनां अयौगपद्यात् युगपद्वृत्तित्वाभावात् तस्य मनसोऽणुत्वं यदि मनोविभुस्यात्तर्हि सर्वज्ञानानि युगपदेव भवेयुः विभोः सर्वेन्द्रियैः सह सर्वदा संयोगात् अथवा नस्युर्विभ्वोः संयोगाभावात् ॥ ८५ ॥ तथाच वैशेषिकसूत्रम् ।
" तदभावादणु मनः " ७ अ० १ आ० २३ सूत्रम्

अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ।
रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥
द्रवो गुरुत्वं स्नेहश्च वेगोमूर्त्तगुणा अमी ।
धर्माधर्मौ भावना च शब्दोबुद्ध्यादयोऽपि च ॥८७॥
एतेऽमूर्त्तगुणाः सर्वे विद्वद्भिः परिकीर्त्तिताः ।
संख्यादिश्च विभागान्त उभयेषां गुणोमतः ॥८८॥

अथ गुणनिरूपणम् अथेति । अथ शब्दस्य आनन्तर्य्यमित्यर्थः द्रव्यनिरूपणानन्तर गुणं निरूपयति सर्वे गुणा द्रव्याश्रिता द्रव्यमात्राधारा निर्गुणा गुणरहिता निष्क्रियाः कर्महीनाश्च बोध्या अतः सामान्यवत्त्वे सति कर्मान्यत्वे च सति निर्गुणत्वं गुणसामान्यलक्षणम् निर्गुणत्वमात्रोक्तौ कर्मण्यतिव्याप्तिस्तद्वारणाय "कर्मान्यत्वे" इति तावन्मात्रोक्तावपिसामान्येऽतिव्याप्तिस्तद्वारणाय सामान्यवत्त्वेस-

तीति निर्गुणत्वानुक्तौ परिशिष्टोक्तौ द्रव्येऽविव्याप्तिः स्यात्तद्वार-णाय "निर्गुणत्वमिति" "निष्क्रिया इति स्वरूपकथनं नतु लक्षणघटकं गगनादावतिप्रसङ्गात्। गुणानामवान्तरविशेषं वक्तु-कामस्तावन्मूर्त्तगुणानाह-रूपमिति ॥ ८६ ॥

अमूर्त्तगुणानाह धर्माधर्माविति ॥ ८७ ॥ मूर्त्तामूर्त्तगुणानाह संख्यादिरिति। संख्यापरिमाणे पृथक्त्वसंयोगविभागा मूर्त्तामूर्त्त-वृत्तय इत्यर्थः ८८ ॥

संयोगश्च विभागश्च संख्याद्वित्वादिकास्तथा।
द्विपृथक्त्वादयस्तद्वदेते ऽनेकाश्रिता गुणाः॥ ८९॥
अतः शेषा गुणाः सर्वे मता एकैकवृत्तयः
बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिकोद्रवः ९०
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः।

अनेकवृत्तिगुणानाह-संयोग इति। द्वित्वादिका इत्यादि पदात् त्रिचतुष्ट्वादिग्रहणं एवं द्विपृथक्त्वादय इत्यत्राप्यादिपदात् त्रिपृथक्त्वादि अनेकाश्रिता इत्यत्र न एकाश्रिता अनेकाश्रिता इति समासो न साधु संयोगादीनां द्विवृत्तीनामपि तदन्तर्गतैका-श्रितत्वसत्त्वात्। किन्तु न एकं अनेकं अनेकं आश्रिता अनेका-श्रिता इति संयोगादीनांद्विवृत्तित्वात् ॥८९॥ एकवृत्तिगुणानाह-अत इति। अतः अस्मात् संयोगादिपञ्चकात् शेषा अवशिष्टा ये गुणा रूपादयस्ते एकैकवृत्तयः। विशेषगुणानाह-बुद्ध्यादीति। विशेषा एव वैशेषिका स्वार्थे ठक् ॥ ९० ॥

संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥९१
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ।
संख्यादिरपर त्वान्तोद्रवत्वं स्नेह एव च ॥ ९२ ॥
एतेतु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः ।
बाह्यैकैकेन्द्रियग्राह्या गुरुत्वादृष्टभावनाः ॥ ९३ ॥
अतीन्द्रिया विभूनान्तु ये स्युर्वैशेषिका गुणाः ।
अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥९४॥
अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् ।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ९५ ॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ।
संयोगश्च विभागश्चवेगश्चते तु कर्मजाः ॥ ९६॥

सामान्यगुणानाह संख्यादिरिति । ९१ । द्वीन्द्रियग्राह्यगुणानाह संख्यादिरिति । द्वाभ्यां चक्षुस्त्वग्भ्यां ग्रहणयोग्यत्वात् । ९२ । बाह्यैकेन्द्रियग्राह्यगुणानाह अथेति । अतीन्द्रियगुणानाहगुरुत्वेति । अतीन्द्रिया इन्द्रियागोचराः ॥ ९३ ॥ अकारणगुणोत्पन्नगुणानाह विभूनांत्विति । विभूनां आकाशात्मनां कालदिशोर्वैशेषगुणाभावात् ये विशेषगुणा आकाशस्य ॥

शब्दमात्रं आत्मनश्च बुद्ध्यादयोष्टौ पूर्वोक्तास्ते स्वाश्रयनिसत्वादाकारणगुणोत्पन्नाः ॥ ९४ ॥ कारणगणोत्पन्नगुणानाह

अपाकजा इति । अत्रापाकजा इति विशेषणं पाकजानां कारणगुणत्वाभावबोधनाय स्पर्शान्ताः रूपरसगन्धस्पर्शाः तथाविधमपाकजम् ॥ ९५ ॥ कर्म्मजगुणानाह-संयोग इति । कर्मजाः कर्मासमवायिकारणका इत्यर्थः ॥ ९६ ॥

स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके ।
भवेदसमवायित्वमथ वैशेषिके गुणे ॥ ९७ ॥
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः ।
वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥९८॥
द्विधैव कारणत्वं स्यादथप्रादेशिकोभवेत् ।
वैशेषिकोविभुगुणः संयोगादिद्वयंतथा ॥९९॥

असमयिकारणगुणानाह-स्पर्शान्तेति । कार्य्यगतान् रूपादि गुणान्प्रति कारणगतास्त एवासमवायिनः यथा घटस्य रूपादिकं प्रति कपालस्य ॥ ९७ ॥ निमित्तकारणगुणानाह-अथेति । आत्मनोविशेषगुणे बुद्ध्यादाविच्छादिकं प्रति निमित्तत्वम् । उभयविधगुणानाह-कारणस्योष्णस्पर्शगुरुत्ववेगद्रवत्वसंयोगविभागाः कार्य्यस्यैतान्प्रत्येव समवायिनः पाकजरूपादौ अभिघाते संग्रहेच क्रमादेषां निमित्तत्वम् ॥ ९८ ॥ अव्याप्यवृत्तिगुणानाह-अथेति । बुद्ध्यादयः शब्दसंयोगविभागा अव्याप्यवृत्तयः आश्रयैकदेशवर्त्तिन इत्यर्थः ॥ ९९ ॥

चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम्

चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०० ॥
जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् ।
रसस्तु रसनाग्राह्योमधुरादिरनेकधा ॥ १०१ ॥
सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।
घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥१०२ ॥
सौरभश्चासौरभश्च स द्वेधा परिकीर्त्तितः ।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥१०३॥
अनुष्णाशीत शीतोष्णभेदात्स त्रिविधोमतः ।
काठिन्यादिः क्षितावेव नित्यादि च पूर्ववत् ॥१०४॥
एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित् ।
तत्रापि परमाणौ स्यात्पाकोवैशेषिकेनये ॥ १०५ ॥
नैयायिकानान्तुनये द्व्यणुकादावपीष्यते ।

अथ रूपादिगुणेषु प्रत्येकं निरूपयितुकाम स्तावद्रूपं निरूपयति चक्षुर्ग्राह्यमिति । चक्षुर्ग्राह्यविशेषगुणत्वं रूपस्य लक्षणम् बुद्ध्यादिवारणाय चक्षुर्ग्राह्येति संख्यावारणाय विशेषेति स्नेहसांसिद्धिकद्रवत्वयोरतिव्याप्तिवारणाय मात्रपदं द्रव्यादेरिति द्रव्यगुणकर्मसामान्यानां उपलम्भकमुपलब्धिकारणं प्रत्यक्षे कारणमित्यर्थः बहिर्द्रव्यचाक्षुषप्रत्यक्षे रूपस्य हेतुतया रूपं विना तत्सर्वमेवा-

प्रत्यक्षमितिभाव एतदेवाह चाक्षुष-इति । चाक्षुषप्रत्यक्षे जननीयं चक्षुषः सहकारिकारण मित्यर्थः किञ्च तत्र शुक्लादिकं शुक्लमारभ्य पीतरक्तनीलहरितकपिशचित्रभेदादनेकधा अनेकप्रकारकं सप्तविध मित्यर्थः ॥ १०० ॥ जलादीति । जलपरमाणौ आदिना तेजः परमाणौ तद्रूपं नित्यं अन्यद् एतद्भिन्नं पृथिवीपरमाणुरूपं जन्य-पृथिवीजलतेजोरूपं सहेतुकमनित्यमाश्रयानित्यत्वात् तथाच वैशेषिक सूत्रं पृथिव्यादिरूपरसगन्धस्पर्शाद्रव्यानित्यत्वादनित्याश्च । ७ अ० १ आ० २ सू० अनित्येष्वनित्याद्रव्यानित्यत्वात् । ७ अ० १ आ०५ सू० । रसं निरूपयति रसस्त्विति रसनाग्राह्योगुणोरसः रसत्वे रसाभावेचातिव्याप्तिवारणायगुणपदं आकाङ्क्षावारणाय रसनेति । मधुरादिरनेकधा मधुराम्ललवणकटुकषायतिक्तभेदात्ष-ड्विधः ॥ १०१ ॥ रसज्ञाया जिह्वाया रासनप्रत्यक्षे सहकारी नित्यतादि नित्यानित्यत्वे पूर्ववद् जलपरमाणौ रसोनित्यः पृथिवी परमाणौ जन्यजलपृथिव्योश्चानित्यः । गन्धं निरूपयति-घ्राण ग्राह्य इति । घ्राणग्राह्योगुणोगन्धः गन्धत्वेऽतिव्याप्तिवारणाय गुण-पदं घ्राणस्यैव घ्राणजप्रत्यक्ष उपकारकः सहकारीत्यर्थः ॥ १०२ ॥ तं विभजते सौरभइति । सुरभिरसुरभिश्चेति गन्धोद्विविध इत्यर्थः ॥

स्पर्शं निरूपयति । स्पर्शस्त्वितित्वगिन्द्रियमात्रग्राह्योगुणः स्पर्शः स्पर्शत्वेऽव्याप्तिवारणाय गुणपदं संयोगादावतिव्याप्तिवारणाय मात्रपदम् त्वचस्त्वाचप्रत्यक्षे उपकारकः कारणम् ॥ १०३ ॥ स च अनुष्णाशीतः शीतउष्णः इतिभेदैस्त्रिधा तत्रानुष्णाशीतः पृथिवी वाय्वोः शीतोजले उष्णस्तेजसि कठिनः आदिपदात्कोमलश्च स्पर्शः

पृथिव्यामेव तस्य नित्यतादि नित्यत्वमनित्यत्वञ्च पूर्ववदिति जल-तेजोवायूनां स्पर्शः नित्यः पृथिवीपरमाणूनां जन्यजलतेजोवायू-नामनित्यः ॥ १०४ ॥ रूपादिचतुष्केयोविशेषस्तमाह एतेषामिति एतेषां रूपरस गन्धस्पर्शानां पाकजत्वं पाकस्तेजः संयोगस्तज्जन्य-त्वंक्षितौ पृथिव्यामेव अन्यत्र कुत्र चिन्न पृथिवीगतं रूपादिचतुष्टयं पाकजं जलतेजोवायुगतञ्चापाकजमेव तत्रापि पृथिव्यवयवेष्वपि परमाणावेव पाकोनद्व्यणुकादौ वैशेषिके नये पीलुपाकवादिमते तत्र हि पाकार्थमपक्वघटोयदा महामहानमे निधीयते तदा तदन्तः प्रविष्टाभि र्वेगवदग्निज्वालामालाभिरवयवविभागेन पूर्वावयवसंयोगो विनष्टेऽसमवायिकारणनाशाद्भावकार्य्यनाश इति नियमात् श्याम-घटे विनष्टे पुनः परमाणुषु रक्तरूपोत्पत्त्या द्व्यणुकादि क्रमेण रक्तघटोत्पत्तिरिति ॥ १०५ ॥ नैयायिकानां पिठरपाकवादिनां मते द्व्यणुकादावपिशब्दात्परमाणावपि पाकः तन्मतेऽवयविनां सच्छिद्रतया तदन्तराग्निप्रवेशसम्भवादवयविनमारभ्य परमाणुपर्य-न्तंपाकाविरोधात् असंख्यावयवनाशोत्पत्तिकल्पनायां गौरवापा-तात् । अपक्वघटान्तर्निक्षिप्तस्यजलस्यवहिर्भागे स्रुतिरेव सच्छिद्र-तायांमानम् ॥

गणनव्यवहारे तु हेतुः संख्याभिधीयते ॥ १०६ ॥
नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।
द्वित्वादयःपरार्धान्ता अपेक्षाबुद्धिजा मताः ॥१०७॥
अनेकाश्रयपर्य्याप्ता एते तु परिकीर्त्तिताः ।

अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥१०८॥
अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धि रुच्यते ।

संख्यांनिरूपयति गणनेति। गणनंएकः द्वौ त्रय इत्यादि व्यवह्री यतेऽननेतिव्यवहारोज्ञानं तदिहलौकिक प्रत्यक्षंतत्रहेतुरसाधारणं-कारणं गुणः संख्या तथाच गणन व्यवहारासाधारणकारणत्वं संख्यायालक्षणम् । साचएकत्वमारभ्यपरार्धपर्य्यन्ता,एकत्त्वस्यनि-त्यानित्यत्त्वविषयतां दर्शयति नित्यष्वेति।नित्येष्वाकाशादिषु एकत्वं नित्यं आश्रयनित्यत्वात् । अनित्ये घटादौ एकत्वमनित्यमाश्रया-नित्यत्वात्। द्वित्वादीनामनि त्यत्वे युक्तिमाह द्वित्वादयइति । द्वित्रि-चतुरादिका परार्धपर्य्यन्ता संख्या अनेकाश्रयपर्य्याप्ता नानाधिक-रणालम्बना अपेक्षाबुद्धिजा अपेक्षाबुद्धिजन्यास्ततएवानित्या इत्यर्थः । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति चतुर्थक्षणे अपेक्षाबुद्धे-र्नाशात् तत्प्रतीत्यधीनप्रतीतीनांद्वित्वादीनांनाशस्ततएवतेषामनि-त्यत्वमितिभावः ॥१०८॥ प्रसंगप्राप्तामपेक्षाबुद्धिंलक्षयति अनेके-षामेकत्वानामवगाहिनी अयमेकोयमेक इत्याकारिका बुद्धिरपेक्षा बुद्धिः

परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥१०९॥
अणुदीर्घमहद्ध्रस्वमितितद्भेदईरितः ।
अनित्ये तदनित्यं स्यान्नित्येनित्यमुदाहृतम् ॥११०॥
संख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यंद्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥१११॥

परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्योयः संयोगस्तेनजन्यते ॥११२॥
परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः ।

परिमाणं निरूपयति परिमाणमिति । मानं इयत्तयावधारणं तदात्मकोयोव्यवहारस्तस्य कारणं असाधारणकारणमित्यर्थः परिमाणं नाम गुणः तथाच परिमितिव्यवहारासाधारणकारणत्वं परिमाणस्य लक्षणम् । कालादि साधारणकारणवारणायासाधारणमिति ॥१०९॥ तद्विभजते अण्विति अणु महव दीर्घह्रस्वश्चेति चतुर्विधम् । प्रकारान्तरेण पुनर्विभजतेअनित्य इति । तत्पूर्वोक्तं चतुर्विधं परिमाणं अनित्येकार्य्यद्रव्ये द्व्यणुकादौ अनित्यं नित्ये परमाण्वाकाशादौ नित्यम् ॥११०॥ अनित्यं कारणस्य त्रैविध्येन त्रैविधमित्याहसंख्यात इति । अनित्यंपरिमाणं त्रिविधं संख्याजन्यं परिमाण जन्यं प्रचयजन्यंच । तत्र संख्याजन्यमुदाहरतिद्व्याणुकादाविति । द्व्यणुकपरिमाणं परमाणुगतद्वित्वसंख्याजन्यं त्रसरेणुगतं महत्परिमाणं द्व्यणुकगतात्रित्वसंख्याजन्यामित्यर्थः ॥१११॥ परिमाणजन्यमुदाहरातिपरिमाणमिति । घटादि परमाणं परिमाणजं कपालादिपरिमाणजन्यम् प्रचयजन्यमुदाहर्त्तुंप्रचयं तावन्निर्वक्ति प्रचयइति । शिथिलत्वं संयोगत्वव्याप्योजातिविशेषः अवयवानां परस्परमदृढतयायोगः शिथिलसंयोस्तज्जन्यः प्रचयइत्यर्थः ।११२। तृतीयमुदाहरातिपरिमाणं तूलकादा विति । तूलकादिपरिमाणं समुच्छ्रितिलक्षणं प्रचयजन्यमित्यर्थः अनित्यामित्यर्थः । अनित्य-

परिमाणस्य नाशक्रमाह नाश इति । आश्रयस्य परिमाणाधारस्य द्रव्यस्य नाशतोनाशात् परिमाणस्य नाशः ।

संख्यावत्तु पृथक्त्वं स्यात् पृथक् प्रत्ययकारणम् ॥११३॥
अन्योन्याभावतोनास्य चरितार्थत्वमुच्यते ।
अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥११४॥

पृथक्त्वं निरूपयतिसंख्यावदिति । पृथक् प्रत्ययासाधारण-कारणं, पृथक्त्वम् । तच्चसंख्यावदिति एकत्वमिव एकपृथक्त्वं नित्येनित्यमनित्येऽनित्यम् । द्विपृथक्त्वादिकन्तुद्वित्वादिकमिवाने-काश्रयवृत्ति अपेक्षाबुद्धिजन्यमपेक्षाबुद्धिनाशाच्च नश्यति ॥११३॥ नन्वयमस्मात्पृथक् अर्थात् घटः पटात्पृथगिति पृथक्त्वप्रतीतेरय-मसौ न अर्थात्घटः पटोनेत्य न्योन्याभावप्रतीतेरर्थाविशेषात्पृथ-क्त्वस्यान्योन्याभावे एवान्तर्भावोभवतु किं पृथक्त्वस्य पृथक् स्वी-कारेणेत्यत्राह अन्योन्या भावत इति अन्योन्याभावतः अन्यो-न्याभावात् अस्यपृथक्त्वस्य चरितार्थत्वं सिद्धिर्नोच्यते न कथ्यते पूर्वैरितिशेषः कुतोहि यस्मात् अयमस्मापृथक् घटः पटात्पृथक् इति पृथक्त्वप्रतीतेः इति इदं न ( घटःपटोन ) इत्यन्योन्याभाव-प्रतीतिर्विलक्षणा । नन्वत्रापि शब्दवैलक्ष्यं नार्थभेदइतिचेन्न विना-र्थभेदं घटः पटात् पृथक् इतिवत् घटः पटोनेत्यत्रापि पञ्चमी स्यात् तस्मात्पृथक्त्वं गुणान्तरमेव ॥ ११४ ॥

अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्तितस्त्रिविधस्त्वेषआद्योन्यतरकर्मजः ॥११५॥

तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः ।
आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥११६॥
मेषयोःसन्निपातोयः सद्वितीय उदाहृतः ।
कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः ॥११७॥
तृतीयः स्यात्कर्मजोपि द्विधैवपरिकीर्तितः ।

संयोगं निरूपयतिअप्राप्तयोरिति । अप्राप्तयोः असंबन्धयोः प्राप्तिः संबन्धः संयोगः समवायादिवारणाय अप्राप्तयोरिति आकाङ्क्षावारणाय प्राप्तिरिति तथाचामिळितयोर्मिळनं संयोग इति फलितम्। तं विभजतेकीर्त्तित इति। एषः संयोगः। त्रैविध्यं दर्शयति आद्य इति। अन्यतरकर्मजोभयकर्मजसंयोगजभेदात्संयोगस्त्रिविध इत्यर्थः ॥ ११५ ॥

त्रैविध्यमुदाहरतिआदिम इति। श्येनशळौदिसंयोग आदिमः प्रथमोऽन्ततरकर्मजः श्येनमात्र क्रियाजन्यत्वात् ॥ ११६॥ मेषयोः यः सन्निपातोऽभिघातः सद्वितीय उभयकर्मज उभयक्रियाजन्यत्वाद्। कपालतरुसंयोगजन्योघटतरुसंयोगस्तृतीयःसंयोगजसंयोगः। तृतीय इति पदं पूर्वान्वयि नतु परान्वयि ॥ ११७॥

अभिघातोनोदनञ्च शब्दहेतुरिहादिमः ॥ ११८ ॥
शब्दाहेतुर्द्वितीयः स्याद्विभागोपित्रिधाभवेत् ।
एककर्मोद्भवस्त्वाद्योद्वयकर्मोद्भवः परः ॥ ११९ ॥

विभागजस्तृतीयःस्यात् तृतीयोऽपिद्विधा भवेत् ।
हेतुमात्रविभागोत्थोहेत्वहेतुविभागजः ॥ १२० ॥

कर्मजं संयोगंविभजतेकर्मजोपीति । क्रियाजन्यसंयोगोपि द्विविधः अभिघातनोदनभेदात् तत्राभिघातो वेण्यादिना ढक्कादेर्वादनम् तत्र शब्दोत्पत्तेराह आदिमः शब्दहेतुरिति ।११८। नोदनञ्चक्रकचकर्त्तर्य्यादिना काष्ठादे॰ कर्त्तनं तस्यशब्दानुत्पादकत्वादाह द्वितीयः शब्दाहेतुरिति । विभागं निरूपयतिविभागोपीति । विभक्तप्रत्ययासाधारणकारणं विभागः सोपित्रिविधः एकक्रियाजन्योभयक्रियाजन्यविभागजन्यभेदात्, आद्यः श्येनशैलविभागः द्वितीयो मेषयोर्विभागः तृतीयः कपालतरुविभागात्कुम्भतरु विभागः ॥ ११९ ॥

विभागजाविभागं विभजतेतृतीयोऽपीति । द्विधा द्विविधः कारणमात्रविभागजन्यः कारणाकारणविभागजन्यश्चेति आद्योयथा-कपालद्वयविभागात् घटनाशोत्तरं कपालस्य देशान्तरेण विभागः द्वितीयः कपालतरुविभागात्कुम्भतरु विभागः ॥ २०१ ॥

परत्वं चापरत्वञ्च द्विविधंपरिकीर्तितम् ।
दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ।१२१।
परत्वं मूर्तसंयोगभूयस्त्वज्ञानतोभवेत् ।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् । १२२ ।
तयोरसमवायी तु दिक् संयोगस्तदाश्रये ।

दिवाकरपरिस्यन्दपूर्वोत्पन्नत्वबुद्धितः ॥१२३॥
परत्वम परत्वं तु तदनन्तरबुद्धितः ।
अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः।१२४
अपेक्षाबुद्धिनाशेन नाशस्त्वेषामुदाहृतः ।

परापरत्वे निरूपयितुं विभजतेपरत्वञ्चेति । दैशिकं दिक्कृतं कालिकं कालकृतं दैशिकपरत्वापरत्वयोर्विषयतामाह । ते मूर्तें एव भूर्त्तद्रव्ये क्षित्यप्तेजोवायुमनस्सु केवलं वर्त्तेते नान्यत्र ॥ १२१॥ तयो र्हेतुमाहपरत्वमिति । दैशिकपरत्वे मूर्त्तसंयोगभूयस्त्वज्ञानं हेतुः एवं दैशिकापरत्वे मूर्त्तसंयोगाल्पत्वज्ञानं हेतुः अत्रावधित्वार्थकद्वितीयापेक्षा तथाच यस्मात् यमपेक्ष्य योविप्रकृष्टः तस्मात् तमपेक्ष्य स मूर्त्तसंयोगभूयस्त्वज्ञानवत्त्वात् परः यथापाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य प्रयागःमूर्त्तसंयोगभूयस्त्वज्ञानवानितिपरःएवमेवयस्मात् यमपेक्ष्य यः सन्निकृष्टः तस्मात्तमपेक्ष्य स मूर्त्तसंयोगाल्पज्ञानवत्त्वादपरःयथा पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्य प्रयागः मूर्त्तसंयोगाल्पत्वज्ञानवानित्यपरः ।१२२। तयोरसमवायिकारणमाहतयोरिति। तयोर्दैशिक परत्वापरत्वयोः आश्रये समवायिनि पिण्डे दिक्संयोगोऽसमवायी असमवायिकारणंतयोरितिशेषः । कालिकपरत्वापरत्वयोः कारणं वक्ति दिवा करेति । यस्य सूर्य्यपरिस्यन्दापेक्षया यस्य सूर्य्यपरिस्यन्दोऽधिकः स तदपेक्षया ज्येष्ठः यस्य च न्यूनः स कनिष्ठः ॥ १२३ ॥ अत्र कालिकपर त्वापरत्वयोः कालपिण्डोः संयोगः कालेन सह पिण्डस्य ज्येष्ठक-

निष्ठयोः शरीरस्य यः सम्बन्धः सोऽत्रासमवायी असमवायि कारण-मित्यर्थः ।१२४। एषांनाशहेतुमाह अपेक्षेति । अपेक्षाबुद्धिनाशो-दैशिककालिकपरत्वापरत्वानां नाशकः ॥

बुद्धेः प्रकारः प्रागेव प्रायशोऽपि निरूपितः ॥१२५॥
अथावशिष्टोप्यपरः प्रकारः परिदर्श्यते ।

अप्रमाच प्रमाचेति ज्ञानं द्विविधमुच्यते ॥१२६॥
तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।

तत्प्रपञ्चोविपर्यासः संशयोऽपि निरूपितः ॥१२७॥
आद्योदेहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या संशयोथ प्रदर्श्यते ॥१२८॥
किंस्विन्नरोवा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।

तदभावाप्रकाराधीस्तत्प्रकारा तु निश्चयः ॥१२९॥
स संशयोमतिर्यास्यादेकत्राभावभावयोः ।
साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥१३०॥

क्रमप्राप्तां बुद्धिं निरूपयितुमाहबुद्धेरिति । बुद्धेर्ज्ञानस्य प्रकारः भेदप्रभेदादिः प्रायशोबाहुल्येन प्रागेव आत्मनिरूपणानन्तरमेव अनुभूतिः स्मृतिश्चेत्यादिना यद्यपि निरूपितः तथापि प्रमा-ऽप्रमादिभेदेनावशिष्टः प्रकारः अथानन्तरं परिदर्श्यते विवि-च्योच्यते ॥ १२५ ॥

बुद्धिं विभजते अप्रमेति । प्रमाऽप्रमाभेदेन ज्ञानंद्विविधमित्यर्थः भेदाविमौक्रमेण अयथार्थानुभवोयथार्थानुभवश्चेति नामभ्यामपि व्यपादिश्यते । ननु बुद्धे रत्रशिष्टः प्रकारः परिदर्श्यत इति प्रतिज्ञाय ज्ञानविभजने कःप्रसङ्ग इति चेत्सत्यं "बुद्धिरुपलब्धिर्ज्ञानमित्यन-र्थान्तरम्" इति गौतम सूत्रेण तयोः पर्य्यायता प्रतिपादनात् ज्ञानविभागे बुद्धेरेव विभाग इति शब्दान्तरो पादानं न दोषाव-हम् । १२६ । अप्रमां लक्षयतितच्छून्य इति । शून्यपद प्रसन्ता-भाववदर्थकम् तथाच तदभाववति तत्प्रकारकं ज्ञानं अप्रमा भ्रम इत्यर्थः । अप्रमां विभजतेतत्प्रपञ्चइति, विपर्य्यासोविपर्ययोविरुद्ध ज्ञान मिति यावत् संशयः सन्देहोपि तत्प्रपञ्चः अप्रमाप्रपञ्च अप्रमाभेद इत्यर्थः । कैश्चिदत्र तर्कोऽपि संगृहीतः तथाच संशय-विपर्य्ययतर्कभेदादप्रमा त्रिधेत्यर्थः । १२७ । विपर्य्यासः साद्दिषु भेदेषु प्रत्येकमुदाहरति आद्य इति । अनात्मभूते देहे आत्ममतिः स्वभावतः शुक्ले शंखे पीतः शंख इति ज्ञानं विपर्य्ययः ॥ १२८ ॥

संशयमुदाहरतिकिंस्विदिति । किंस्वि दिति वितर्के दूरात् उच्चैस्तरत्वं स्थाणुपुरुषसाधारणं धर्मं दृष्ट्वा किमयं स्थाणुः पुरुषो-वेत्याद्युभयकोट्यवगाहि ज्ञानं संशयः । प्रसङ्गेन निश्चयं लक्षयति तदभावेति । तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानं निश्चयः प्रमेत्यर्थः संशयेऽतिप्रसङ्गभङ्गाय विशेषणदलम् निर्विकल्पकेऽन्य-प्रकार केत्त्रतिप्रसङ्गभङ्गाय दलांतरम् । संशयं लक्षयतिस संशयइति। एकधर्मिविशेष्यकविरुद्धकोटिद्वयप्रकारकज्ञानत्वं संशयस्य लक्षणम् क्षितिजले गन्धतदभाववतीत्याद्याकारकज्ञानवारणाय एकधर्मिकेति

वृक्षःसंयोगी तदभाववांश्चेत्यादिवारणाय विरुद्धेति घटः क्षितिर्जलं चेति समुच्चयवारणाय भावाभावेति संशये हेतुमाहसाधारणदीति-साधारणधर्मज्ञानमादिपदादसाधारण धर्मग्रहस्तज्ज्ञानञ्च संशय कारणं तत्रसाधारणधर्मजन्योयथास्थाणुर्वापुरुषोवा अत्रोच्चैस्तरत्वं धर्मः स्थाणुपुरुषसाधारणः । असाधारणधर्मजन्योयथा शब्दो-नित्योऽनित्यो वा इत्यत्र शब्दत्वमसाधारणोधर्मः । न्यायभष्यकृ-न्द्रिरन्यान्यपि विमतिपत्यादीनि संशय कारणान्यभिहितानि तथाहि समानानेकधार्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यव-स्थातश्च विशेषापेक्षोविमर्शः संशय इति । वैशेषिकदर्शनकारैस्त्वेषां संशयजनकत्वं निराकृतमिति नेहोक्तम् ॥ १३० ॥

दोषोऽप्रमाया जनकः प्रमायास्तुगुणोभवेत् ।
पित्तदूरत्वादिरूपो दोषोनानाविधःस्मृतः ॥१३१॥

दोषादप्रमोत्पत्तिरित्याह दोष इति । अप्रमाया अयथार्थज्ञा-नस्य पीतः शङ्ख एवमात्मकस्य जनकः कारणं दोषोऽन्यथादर्शन-मित्यर्थः । प्रमायास्तु यथार्थज्ञानस्य तु पुनः गुणो विशेषणं जनक इत्यर्थः स्वविशेषणविशिष्टविशेष्यदर्शनादेव प्रमोत्पत्तिरिति भावः । दोष दर्शयतिपित्तेति । पित्तं चिकित्साशास्त्रप्रसिद्धो दोषविशेषः । दूरत्वं दूरता आदि पदात् मण्डूकवसाञ्जनचाकचिक्यादिपरिग्रहः तदादीनि तत्प्रभृतीनि रूपाणि स्वरूपाणि यस्य स तथोक्तःदोषो नानाविधः स्मृतोमतः । शङ्ख गत पीतिमभ्रमे पित्तं दोषः चन्द्रमसः

स्वल्पतायां दूरत्वं दोषः वंशोरगे मण्डूकवसाञ्जनं दोषः। रज्जोया-सर्प्पधी स्तत्रान्धकारो दोषः। एवमन्येऽपि यथायथं ऊह्याः ॥१३१॥

प्रत्यक्षेतु विशेष्येण विशेषणवता समम् ।
सन्निकर्षोगुणस्तुस्यादथत्वनुमितौ गुणः ॥१३२॥
पक्षे साध्यविशिष्टे च परामर्शोगुणोभवेत ।
शक्ये साहृश्यबुद्धिस्तु भवेदुपमितौगुणः ॥१३३॥
शाब्दबोधे योग्यतायास्तात्पर्य्यस्याथवा प्रमा ।
गुणः स्याद्भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा ॥१३४॥
अथ वा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् ।
तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥१३५॥
प्रकारतादिशून्यं हि संवन्धानवगाहि तत ।

प्रमाभेदेन गुणविशेषमाह प्रत्यक्षेत्विति । प्रत्यक्षे प्रत्यक्ष प्रमायां विशेषणवता घटत्वादिमता विशेष्येणघटादिना सह सन्निकर्षः चक्षुरादेरिन्द्रियस्यसंयोगादिः गुणः । अथानुमितौ तु ॥१३२॥ साध्यविशिष्टेसाध्यं वन्हयादिः तद्विशिष्टे तद्युक्ते पक्षे पर्वतादौप-रामर्शोव्याप्यवत्ताज्ञानम् । शक्ये गवयादौसाहृश्यबुद्धिः गवादि-साहृश्य ज्ञानमुपमितौ ॥ १३३ ॥ शाब्दबोधे शाब्दप्रमायां योग्य-ताया उक्तलक्षणायास्तात्पर्य्यस्य वक्त्रभिप्रायस्य वा प्रमा यथार्थ-ज्ञानं गुणः । प्रमांनिरूपयति । भ्रमभिन्नमिति । अत्रन्याय शास्त्रे अन्यस्याऽन्यथादर्शनं भ्रमः। तद्भिन्नं तद्व्यतिरिक्तं ज्ञानं प्रमेत्यर्थः। एवञ्च भ्रमभिन्नत्वे सतिज्ञानत्वं साति ज्ञानत्वं प्रमाल क्षणं भ्रमसं-

भिन्ने शुक्तिकायां रजतमेत्रमात्मके ज्ञानेऽतिप्रशक्तिवारणाय विशेषणम् । पटादावतिव्याप्तिवारणायविशेष्यम् । एतल्लक्षणस्य "रङ्ग रजतयोरिमेरजते" इत्यत्र रजतांशे रजतज्ञानस्यप्रमात्मकस्यापि रङ्गांशे रजतज्ञानेन भ्रमरूपेण संभिन्नतया भ्रमभिन्नत्वाभावेन प्रमात्वाऽभावाद व्याप्तिरतोलक्षणान्तरमाहअथवेति । तद्वद्विशेष्येकत्वेसतितत्वेसतितत्प्र कारकज्ञानत्वं प्रमायालक्षणम् ॥ १३४ ॥ अथ निर्विकल्पकंनिष्प्रकारकं ज्ञानं कथं प्रमा प्रमायाः सप्रकारकत्वनियमादतआह नप्रमेति किं तर्हिभ्रमः तत्राह नापिभ्रमइति ॥ १३५ ॥ उभयविलक्षणत्वेहेतुमाह प्रकारतादीति हि यस्मात् तन्निर्विकल्पकं प्रकारतादिशून्यं विशेष्यविशेषणभाव रहितं संबन्धानवगाहि संयोगाद्यपरामर्शि भवति ।

## प्रमात्वं न स्वतोग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥

प्रमात्वं ज्ञानप्रामाण्यं ज्ञानमिदं सत्यमसत्यं वेतिनिर्णयः स्वतोग्राह्यं परतोवेतिविचारे ज्ञानगतसत्यत्वं स्वतोग्राह्यं ज्ञानग्राहकसामाग्रीग्राह्यं अर्थात् येनानुव्यवसायेन ज्ञानं गृह्यते तेनैव तद्गतप्रामाण्यमपि गृह्यत इति मीमांसका वदन्ति तद्दूषयन्ति नैयायिका प्रमात्वं नेति । तत्प्रमात्वं स्वतोग्राह्यं न कस्मात् संशयानुपपत्तितः संशयस्य इदंजलज्ञानंप्रमा न वा इत्याकारकसंदेहस्य अनुपपत्तेरसिद्धेः

अयमर्थः यदि ज्ञानप्रामाण्यं स्वतो ग्राह्यं स्यात् तर्हि वालकस्य वाल्येजाते जलज्ञाने ममेदंजातं जलज्ञानं प्रमानवेति संशयोन स्यात् कुतस्तत्र यदि ज्ञानं ज्ञातं तदा तद्गतं प्रामाण्यमपिज्ञातमेवेति कथं संशयः । यदितुज्ञानंन ज्ञातं तदा धर्मिज्ञानाभावात्कथं संशयः ।

संशयें धर्मिज्ञानस्य कारणत्वात् । तस्मात्तत्सफलप्रवृत्तिजनकता-लिङ्गानुमानगम्यमेवेतिभावः ॥ १३६ ॥

व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्त्तकः ॥१३७॥

अनुमितिप्रकरणे व्याप्तिरुदीरिता तद्ग्रहोपायमत्राह व्यभिचारस्येति । हेतुसत्वे साध्याभावो व्यभिचारस्तस्य ग्रहंऽज्ञानं, सहचारः हेतुना सह साध्यसामानाधिकरण्यं तस्यग्रहोज्ञानं व्याप्तिग्रहे हेतुः कारणमित्यर्थः व्यभिचारोहि व्याप्तिविघटकोभवति अतःकारण कोटौ तदभावादरः । व्यभिचारग्रहइव व्यभिचाशङ्काऽपि व्याप्तिग्रहं प्रति वध्नातीत्यतस्तन्निराकरणोपायमाहतर्क इति । धूमेनवन्हि-साधने क्रियमाणे वन्हिर्धूमव्यभिचारीधूमसमानियतार्द्रेन्धनसंयो-गव्यभिचारित्वातिधूमवन्हिव्यभिचारशङ्कायामापादितायांधूमोयदि वन्हि व्यभिचारी स्यात्तर्हिवन्हिजन्योनस्यादिति तर्केण साऽप-नीयते क्वचिदि त्यभिदधता न सर्वत्र तर्कोपयोग इति सूच्यतेस्थ-लविशेषे भूयोदर्शनेन स्वयमपि वा तदपगमात् ॥ १३७ ॥

साध्यस्य व्यापकोयस्तु हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत्तस्य निश्कर्षोयं प्रदर्श्यते ॥१३८॥
सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।
हेतोरेकाश्रये येषां स्वसाध्य व्यभिचारिता ॥१३९॥

व्यभिचारानुमानमुपाधेस्तुप्रयोजनम् ।

उपाधिनामकम परं व्याप्तिप्रतिवन्धकमाह साध्येति । यः साध्यस्य धूमादेः व्यापकः यत्र यत्र धूमस्तत्रतत्रार्द्रेन्धन संयोग इति व्याप्तेः, तथा हेतोः साधनस्य वन्ह्यादेरव्यापकः यत्र यत्रं वन्हिस्तत्र सर्वत्रार्द्रेन्धनसंयोग इति नियमाभावाव स उपाधिरिति भवेत् तथाच साध्य व्यापकत्वे सति साधनाव्यापकमुपाधेर्लक्षणम् यथा पर्वतोधूमवान्वन्हेरित्यत्रार्द्रेन्धनसंयोग उपाधिः कथमितिचे-दुच्यते आर्द्रेन्धनसंयोगोहि यत्र यत्र धूमस्तत्रतत्रार्द्रेन्धन संयोग इति साध्यस्य व्यापको भूत्वाऽपि यत्र यत्र वन्हिस्तत्र तत्रार्द्रेन्धन संयोग इति साधनसहचार व्यभिचारी भवति यतः तप्तायः पिण्डे वन्हिसत्वेप्यार्द्रेन्धनसंयोगा भावात् ॥ १३८ ॥ उपाधेर्निष्कर्षमाह सर्व इति । येषामुपाधीनां हेतोरेकाश्रये साधनाधिकरणेस्वसाध्य व्यभिचारिता स्वस्य साध्यस्य च व्यभिचारिता साधनवन्निष्ठा-त्यन्ताभावप्रतियोगित्वं ते सर्वे उपाधयः साध्यसमानाधिकरणाः साध्यवद्वृत्त्यन्ताभावप्रतियोगिनः स्युः यथापर्वतोधूमवान्वन्हेरित्य-त्रार्द्रेन्धनसंयोग उपाधिः तस्य धूमव्यापकत्वे सति वन्ह्यव्यापक-त्वात् सत्यवन्हिमत्ययः पिण्डे तदभावात् अयमेवकेवलसाध्यव्या-पक इत्युच्यते एवं पक्षधर्म्मावच्छिन्नस्य साधनावच्छिन्नस्य च साध्यस्य व्यापकावुपाधीज्ञेयौ यथा वायुः प्रत्यक्षः प्रत्यक्षस्पर्शा-श्रयत्वादित्त्रोद्भूतरूपवत्वं वहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकत्वे-सति वहिर्द्रव्यत्ववच्छिन्नप्रत्यक्षस्पर्शा श्रयत्वाव्यापकत्वादुपाधिः एवं

सश्यामोमित्रातनयत्वादित्यत्र शाकपाकजत्वमुपाधिः मित्रातनयत्वा वच्छिन्नश्यामत्व व्यापकत्वे सति मित्रातनयाऽव्यापकत्वात् कथं तदव्यापक इतिचेदुच्यते मित्रानाम्नी काचिद्योषिदासीत् तस्यां विपत्पातादुत्तमाहारालाभेन शाकाद्याहारपरिणतिवशात्सप्तसुता श्यामवर्णाः संजाताः पश्चात्संपदुपगमादुत्तमाहारलाभेनाष्टमोगौर उत्पन्नोऽतस्तस्मिन् शाकपाकजत्वाभावात्साधनाऽव्यापकत्वं सुस्पष्टमेव एवमन्यत्रापिबोध्यम् ॥ १३९ ॥

उपाधिफलमाह व्यभिचारस्येति। उपाधिव्यभिचारस्य साध्यव्यभिचारानुमानमुपाधेः फलम् यथा पर्वतोधूमवान्वन्हेरित्यत्र वन्हि धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वात् एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारी उद्भूतरूपवत्त्वव्यभिचारित्वात्। एवं सश्यामो मित्रातनयत्वादित्यत्रमित्रातनयत्वं श्यामत्वव्यभिचारी शाकपाकजत्वव्यभिचारित्वादित्याद्यन्यदप्युन्नेयम् दूषकतायां परमुखनिरीक्षकतया नास्यहेत्वाभासत्वम् ॥

शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥१४०॥
अनुमानगतार्थत्वादितिवैशेषिकंमतम् ।
तन्न सम्यग्विनाव्याप्तिं बोधंशब्दादिबोधतः ॥१४१॥

प्रमाणं प्रत्यक्षादिभेदाच्चतुर्विधमित्युक्तं तत्र वैशेषिमतमपाक-

त्तमुपस्थापयति शब्दोपमानयोरिति । प्रत्यक्षानुमाने द्वे एव प्रमाणे शब्दोपमानयोस्तु पृथक् प्रामाण्यं प्रमाणान्तरत्वं नैवेष्यते निश्चयेन नस्वीक्रियतेऽस्माभिः ॥ १४० ॥ कस्मादनुमानगतार्थत्वात् अनुमान प्रमाणान्तर्भावात् तत्रोपमानस्यानुमानेऽन्तर्भावोयथा 'अयं' पुरोवर्ती पशुःगवयपदवाच्यः गवयत्वात् योनगवयपदवाच्यः स न गवयःयथा गौरश्वश्च तस्माद् गवयपदवाच्य इतिज्ञानं व्यतिरेक्यनुमानमेवनोपमानम् । शब्दस्यानुमानेऽन्तर्भावोयथाऽयं घटपदवाच्यः कस्माद सति व्यसन्तरे वृद्धैस्तत्रैव प्रयुज्यमानत्वात् योन घटपदवाच्यः स नघटोयथापटः इत्यपि तदेवेति यद्वैशेषिकाणां मतं तन्न-सम्यग् युक्तियुक्तं कस्मात् व्याप्तिबोधं व्याप्तिज्ञानं विना शब्दादिबोधतः शब्दबोधतः शब्दमात्रज्ञात् शब्द प्रमाणस्य आदिना सादृश्यमात्र ज्ञानादुपमानप्रमाणस्य सिद्धेरितिशेषः सम्भवादित्यर्थः। अयमत्राभिसन्धिः गवयेगोसादृश्यस्य दर्शनादेवातिदेशवाक्यर्थस्मरणे व्यतिरेक व्याप्तिप्रतिसन्धान विनाप्ययं गवयपदवाच्य इतिज्ञानोदयात् । एवं शब्दार्थयोर्व्याप्त्यभावात् शब्दस्याप्यनुमानेऽन्तर्भावोन तयोः कथं व्याप्त्यभाव इति चेत्पश्य शब्दोगुणास्तिष्ठत्याकाशे तदर्थोमृत्तिराडश्च कुलालगृहे । सर्वदाव्याप्तिज्ञानसापेक्षेऽनुमानेव्याप्तिनिरपेक्षयोः शब्दोप मानयोः कदाचिदप्यन्तर्भावोभवितुं नार्ह इति भावः ॥ १४१ ॥

द्वैविध्यं तु भवेद्व्याप्ते रन्वयव्यतिरेकतः ।
अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ॥१४२॥

साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ।
अर्थापत्तेस्तु नैवेह प्रमाणान्तरतेष्यते ॥ १४३ ॥
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ।

प्रसङ्गात् व्याप्तिं विभजते । द्वैविध्यमिति अन्वयव्यतिरेकतः अन्वयव्यतिरेकभेदात् व्याप्तिर्द्विविधा तत्रान्वयव्याप्तिरनुमानप्रकरणे "व्याप्तिः साध्यवदन्यस्मिन्न सम्बन्धः" इत्यादिना "अथवा हेतु-मन्निष्ठ-त्यादिना च" लक्षिता अथ अन्वयव्याप्तिनिरूपणानन्तरंव्य-तिरेकात् व्यतिरेकव्याप्तिरुच्यते ॥ १४२ ॥ साध्येति । हेत्वभा-वस्ययत्साध्याभावपकत्वं सैव व्यतिरेकव्याप्तिः एवञ्च साध्याभाव-व्यापकीभूताभावप्रतियोगित्वं व्यतिरेकव्याप्तेर्लक्षणम् । अत्र साध्या-भावोव्याप्यः साधनस्याभावश्चव्यापकः । उदाहरणं यथा "द्रव्यंस्वे-तरभिन्न गुणवत्वात्सन्नैवंतन्नैवम् । अत्र साध्यं स्वेतरभेदस्तस्याभावः स्वेतरभेदाभावस्तस्य व्यापकीभूतोऽभावोगुणाभावोस्तत्प्रतियो-गितत्वं गुणे लक्षणसमन्वयः । यथा वा " पृथिवी स्वेतरभिन्ना गन्धवत्वादि यत्र यदितरेभ्यो न भिद्यते न तद्गन्धवदिति व्यतिरेकोयोज्यः । अत्रकेचिन्नचत्वार्य्येव प्रमाणानि किन्त्वधिकानि यथा न्यायभाष्यम् न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्" तत्रार्थापत्तिरपि प्रमाणान्तरमितिवदतां प्राभाकराणां मतं निरस्यति अर्थापत्तेरिति ॥ १४३ ॥ अत्रार्थेयुक्तिमाहव्यतिरेकेति यतः सापि व्यतिरेक्यनुमानेनैवचरितार्था अतएव नातिरिक्ता,

कथं व्यतिरेकव्याप्तिबुद्ध्या चरितार्थैसाकाङ्क्षायामुच्यने श्रूयताम्। तथाहि "अनुपपद्यमानेनार्थेनोपपादक कल्पनमियमेवार्थापत्तिः यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्रभोजनसहचरितं पीनत्वं भोजनमन्तराऽअनुपपद्यमानं रात्रिभोजनं कल्प्यते 'रात्रौ भुङ्क्ते' इति। अधुनास्या व्यतिरेक्यनुमानेऽन्तर्भावोयथा 'देवदत्तोरात्रौ भुङ्क्ते दिवाभुञ्जानत्वे सति पीनत्वात् योहि रात्रौ न भुङ्क्ते नासौदि-वाभुञ्जानत्वेसति पीनो यथा यज्ञदत्त' इति व्यतिरेकव्याप्ति सिद्ध-त्वान्नास्या मानान्तरत्वमिति भावः। तथाच तत्रैव सूत्रम् "शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवानर्थान्तर्भावाच्चाप्रति-षेधः"। अ० २। आ० २। सू० २ अर्थापत्तिरप्रमाणमनैका-न्तिकत्वात् अ० २ आ० २। सू० ३ इति ॥

सुख तु जगतामेव काम्य धर्मेण जन्यते ॥१४४॥
अधर्म्मजन्यं दुःखं स्यात्प्रतिकूलं स चेतसाम् ।
निर्दुःखत्वे सुखेच्छा तज्ज्ञानादेव जायत ॥१४५॥
इच्छा तु तदुपायेस्यादिष्टोपायत्वधीर्यदि ।
चिकीर्षा कृतिसाध्यत्व प्रकारेच्छा च या भवेत्॥१४६
तद्धेतुः कृतिसाध्येष्ट साधनत्वमतिर्भवेत् ।
बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका ॥१४७॥
तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्य चिन्मते ।
द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्य कारणम् ॥ १४८ ॥

प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ।
एवं प्रयत्नत्रैविध्यंतान्त्रिकैः परिकीर्तितम् ॥१४९॥
चिकीर्षाकृतिसाध्येष्ट साधनत्वमतिस्तथा ।
उपादानस्य चाध्यक्षं प्रवृतौ जनकं भवेत् ॥१५०॥
निवृतिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः ।
यत्नो जीवनयोनिस्तु सर्वदाऽतीन्द्रियोभवेत् ॥१५१॥
शरीरे प्राणसंचार कारणं परिकीर्त्तितम् ।

सुखं निरूपयति सुखमिति । जगतां जनानां काम्यमभिलाषविषयः सुखम् । तस्यकारणमाह धर्मेणेति । धर्मकारणकंसुखन्तत्कार्य्यमित्यर्थः ॥ १४४ ॥ दुःखं निरूपयति अधर्मेति । सचेतनां प्राणिनां प्रतिकूलं द्वेषविषयः दुःखं तस्य कारणमाह अधर्मजन्यमिति । अधर्मः कारणं दुःखं तत्कार्य्यमित्यर्थः । दुःखत्वजातिमत्वं अधर्ममात्रासाधारण कारणगुणत्वं दुःखस्य लक्षणम् । इच्छां निरूपयति निर्दुःखत्व इति । इच्छा द्विविधा फलेच्छा उपायेच्छा च फलं च द्विविधं दुःखाभावः सुखं च तत्र दुःखाभावे सुखे च फचे सा इच्छा तयोर्ज्ञानादेवजायते उत्पद्यते इत्यर्थः इच्छात्वजातिमत्वमिच्छाया लक्षणम् ॥ १४५ ॥

तदुपाये तयोर्दुःखाभावसुखयोः साधने इच्छा तदास्यात् यदा इष्टोपाधत्वधीः स्यात् इष्टसाधनता ज्ञानं अर्थात् फलेच्छायां

फलज्ञान मुपायेच्छायामिष्टसाधनताज्ञानं कारणमित्यर्थः । इच्छा-विशेषः चिकीर्षा तस्याः स्वरूपमभिदधत्कारणप्रतिवन्धकात्वप्याह-चिकीर्षेति । कृतिसाध्येक्रियाविषयिणीच्छा चिकीर्षा ॥ १४६ ॥ कृतिसाध्येष्टसाधनत्वमतिः कृतिसाधनत्वमतिः कृतिसाध्यताज्ञानं इष्टसाधनताज्ञानं तद्धेतुः तत्र कारणम् । वलवदनिष्टसाधनता ज्ञानं तत्र प्रतिवन्धकम् । समुद्रलङ्घनादौ कृतिसाध्यताज्ञाना-भावात् जलताडनादाविष्टसाधनताज्ञानाभवात् मधुविषसंपृक्तान्न-भोजनादौ च वलवदनिष्टसाधनताज्ञानाच्च न चिकीर्षा वलवदिति विशेषणात्स्वल्पदुःखे वन्हिप्रज्वालनार्थं फूत्कारोद्भूतधूपावृतनेत्रे पाकादौ न चिकीर्षाऽनुपपत्तिः ॥ १४७ ॥ किञ्चात एववलव-द्द्वेष साधनताज्ञानस्य कस्यचिन्मते चिकीर्षां प्रतिकारणत्वमित्याह तदहेतुत्वेति । कस्य चिन्मत इत्यनेनात्मनस्तत्रास्वरसोदर्शितः तद्वीजन्तु वलवदनिष्टाननुबन्धिज्ञानं विनापि केवलात्कृतिसाध्येष्ट साधनताज्ञानादेवतदुत्पत्तिः । द्वेषं निरूपयति द्विष्टेति द्वेषस्तावद्-द्विविधः प्रथमो दुःखविषय । द्वितीयश्च तदुपायविषयः तत्रादिमे दुःखज्ञानंहेतुः । द्वितीये हेतुमाह द्विष्टेति । द्विष्टसाधनताज्ञानं दुःखो-पाय विषयकं द्वेषं प्रति कारणम् । वलवदिष्टसाधनताज्ञानं द्वेषप्र-तिवन्धकम् । द्वेष्मीत्यनुभवसिद्धद्वेषत्वजातिमत्वं द्वेषस्य लक्षणम् ॥ १४८ ॥ प्रयत्नं विभजते प्रवृत्तिरीति । प्रवृत्तिनिवृत्तिजीवनयोनि-भेदात्प्रयत्नस्त्रिविध इत्यर्थः । तत्रेच्छा जन्योगुणः प्रवृत्तिः । द्वेषजन्यो-गुणोनिवृत्तिः । जीवनादृष्ट जन्योगुणो जीवनयोनिः ॥ १४९ ॥

एष्वाद्ये हेतुमाहचिकीर्षेति । चिकीर्षा तथा कृतिसाध्येष्टसा-धनत्वमतिः कृतिसाध्येष्टसाधनत्वयोर्मतिः द्वन्द्वान्तेश्रूयमाणस्य

मतिशब्दस्य प्रत्येकमन्वयः मतिर्ज्ञानं तथा च कृतिसाध्यताज्ञानमिष्ट साधनताज्ञानं किञ्च उपादानस्य समवायिकारणस्य अध्यक्षं प्रत्यक्षं वा प्रवृत्तौ जनकं मिलित्वाकारणमित्यर्थः मधुविषसंपृक्तान्नभोजने चिकीर्षाभावात्, सुमेरुशृङ्गोत्पाटने कृतिसाध्यताज्ञानाभावात् समुद्रमज्जनेइष्टसाधनताभावात् द्व्यणुकादिनिर्माणे तदुपादानप्रत्यक्षाभावान्न प्रवृत्तिरिति निर्गलितोऽर्थः तन्तुवायादेः पटादौ तच्चतुष्कस्यैव सत्वात्प्रवृत्तिः ॥ १५० ॥

द्वितीये हेतुमाहनिवृत्तिरिति । द्विष्टसाधनताज्ञानाद्द्वेषः द्वेषाच्चनिवृत्तिरित्यर्थः यथा परद्रव्यदारापहरणादौद्विष्टसाधनत्वं बन्धनागारपातादिकं ज्ञात्वा द्वेषेण ततो निवर्त्तते एवं सर्पादिदुष्टजन्तु ग्रहणे मामयं दंक्ष्यति इतिज्ञात्वा ततोपसर्पति एवमन्यत्राऽपि तृतीयमाह जीवनयोनिः जीवनकारणं यत्नो यावदायुरयंसरति अतीन्द्रियश्चास्ति ॥ १५१ ॥ तत्र प्रमाणमाह शरीर इति । नेत्रनिमीलनोन्मीलनयोरिव श्वासप्रश्वासयोरपि यत्नसाध्यत्वात्तत्र योयत्नः स एव जीवनयोनिः तस्य च प्राणसञ्चारकयत्नसाध्यत्वानुमानात् प्रत्यक्षप्रयत्नस्य च तत्र बाधादतीन्द्रियता ।

अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् ॥१५२॥
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ।
तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि ॥१५३॥

गुरुत्वं निरूपयति अतीन्द्रियमिति। गुरुत्व मतीन्द्रियं चक्षुरादि रूपादिवत्प्रत्यक्षं कर्तुमशक्यम् । तस्याश्रयं आह पृथिव्यादिद्वय इति

तद्गुरुत्वं पृथिव्यां जले च तिष्ठति ॥ १५२ ॥ तद्विभजते अनि-त्यइति । अनित्ये घटादौ तदनित्यं आश्रयानित्यत्वात् । नित्ये पार्थिवपरमाणौ जल परमाणौ च नित्यमाश्रयनित्यत्वात् । तदेवेति व्याचष्टे पतनाख्ये कर्मणि आद्यपतन क्रियायां तदेव गुरुत्वमेव असमवायि, असमवायिकारणमित्यर्थः आद्यपतने गुरुत्वमेव हेतुः अनन्तरपतने तु तद्गत क्रियादिकमपीति ज्ञेयम् ॥ १५३ ॥

सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ।
सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः ॥१५४॥
परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ।
नैमित्तिकं वन्हियोगात्तपनीयघृतादिषु ॥ १५५ ॥

द्रवत्वं निरूपयितु कामस्तावत्तद्विभजते सांसिद्धिकमिति । द्रवत्वं द्विविधं एकं सांसिद्धिकं स्वाभाविकमपरं नैमित्तिकं जन्यं तयोः मध्ये कस्य विषयमाह सांसिद्धिकन्तु सलिले जलेऽस्तीति शेषः । द्वितीयं नैमित्तिकं क्षितितेजसोः क्षितौ पृथिव्यां तेजसि-चास्ति ॥ १५४ ॥

परमाणाविति । जलपरमाणौ द्रवत्वं नित्यम् । अन्यत्र पृथिवी परमाणौ जलद्व्यणुकादौ च द्रवत्वम नित्यम् । नैमित्तिकद्रवत्वस्य विशयमाह नैमित्तिकमिति । नैमित्तिकं निमित्तजन्यं वन्हियोगात् अग्निसंता पाज्जतु घृतादिषु तथा प्लुतसुवर्णादिषु चास्ति अत्र वन्हिपदं तेजस उपलक्षणम् तेन धर्मादियोगात्परिस्रुतघृतादावपि नैमित्तिकमेव ॥ १५५ ॥

द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ।

स्नेहोजले सनित्योऽणावनित्योवयविन्यसौ ॥१५६॥
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ।

द्रवत्वं वर्णयति द्रवत्वमिति । आद्यस्यन्दनासमवायिकारणत्वं द्रवत्वस्य लक्षणम् द्रवत्वं स्यन्दने आद्यस्यन्दने हेतुः असमवायि कारणमित्यर्थः संग्रहे सक्तुकादीनामेकत्रीकरणे स्नेहसहितं निमित्तं निमित्तकारणम् । स्नेह निरूपयति स्नेह इति । असौ स्नेहः जले जलमात्रवृत्तिर्गुण इत्यर्थः । अयमपि द्विविधः नित्यो-ऽनित्यश्च तत्रनित्योऽणौ जलपरमाणौ अवयविनि कार्य्यरूपजले त्वनित्यः ॥ १५६ ॥ यदि स्नेहो जलस्यैवगुणः कथंतर्हि तस्य तैलघृतयोरुपलब्धिस्तयोः पार्थिवत्वादित्याशङ्कायामाह सोपि जलस्य एव यद्येवं तर्हितैलाश्रयेण दीपप्रकाशोनस्यात् । तैलस्य स्नेह वत्तया जलत्वाज्जलानलयोश्चविरोधात् अत्रोच्यते न सर्वथा जलानलयोर्विरोध एव अपि तु क्वचिदविरोधोपि व्यवस्थया, तामेवाह तैलान्तरइति । क्वचित्स्नेहस्य प्रकर्ष आधिक्यं क्वचिच्चा-पकर्षोह्रासः स्नेहप्रकर्षवज्जलं वन्हे अनुकूलमेव तथासति तैलान्त-रेतैलरूप जलमध्ये तत्प्रकर्षात् स्नेह प्रकर्षात् दहनस्यानुकूलता दीपप्रकाशकतायां न काप्यनुपपत्तिरितिभावः ॥

संस्कारभेदोवेगोऽथ स्थितिस्थापकभावने ॥१५७॥
मूर्त्तमात्रे तु वेगः स्यात्कर्मजोवेगजः क्वचित् ।
स्थितिस्थापकसंस्कारः क्षितौकेचिच्चतुर्ष्वपि ॥१५८॥

अतीन्द्रियोसौ विज्ञेयः क्वचित्स्पन्देऽपिकारणम् ।

संस्कारं विभजते संस्कार भेद इति । वेगः संस्कारभेदः स्थिति स्थापकभावने च संस्कारभेदौ तथा च वेगभावनास्थितिस्थापकभेदात् संस्कारस्त्रिविध इत्यर्थः ॥ १५७ ॥ वेगोपि त्रिविधः कर्मजवेगजभेदात्तत्राद्यस्य विषयतामाह मूर्त्तमात्र इति । कर्मजो वेगः मूर्त्तमात्रे मूर्त्तद्रव्य एव वर्तते यथा शरीरादौ । द्वितीयस्याश्रयमाह क्वचिदिति वेगजोऽपि क्वचिदाधारे तिष्ठतीत्यर्थः यथा वेगवत्कपालजनितघटे योवेगः स कपालनिष्ठवेगजनितत्वाद्वेगजोवेगः । अन्यथा कृतस्य पुनस्तदवस्था पादकः स्थितिस्थापकः यथाकुसुमावचिचीषया नायिकया करेणाव नम्रतां नीता कुसुमिततरुशाखा करवियोगे स्थितिस्थापक संस्कार वशात्सरलीभवति । तस्य विषयमाह स्थितिस्थापकेति । स्थितिस्थापकः संस्कारः क्षितौ पृथिव्यामेव वर्तते इति ग्रन्थकृन्मन्यते क्षित्यादि चतुर्ष्वपीति केचिद्वदन्ति तदप्रामाणिकमेव ॥ १५८ ॥

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ॥१५९॥
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ।
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ॥ १६० ॥

तृतीयमाह भावनाख्यस्त्विति । अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम् । आत्मादिवारणाय द्वितीयदलम् अयं जीववृत्तिरतीन्द्रियः स्मृतिरूपकार्य्यानुमेयोऽस्ति ॥ १५९ ॥

तस्य कारणमाह उपेक्षेति । तस्य भावनाख्य संस्कारस्य उपेक्षा-नात्मकः उपेक्षा नास्ति आत्मा स्वरूपं यस्य एतादृशो निश्चयोऽनु-भव' वस्तुदर्शनं कारणम् अपेक्षा सहकृतमेव वस्तुप्रत्यक्षं भावनाज-नक मितिभावः चकन्तोऽवतिष्ठमाना वयं शतशः सहस्रशोवा वस्तूनि पश्यामः परं संस्कारस्तस्यैवोत्पद्यते यदपेक्षया दृश्यते। उपेक्षयादृष्टं न संस्कारं जनयतीति स्पष्टार्थः । निश्चय इत्युपादानेन उपेक्षा नात्मकसंशयोऽपि न संस्कारजनक इति ज्ञेयम् । तस्य कार्यमाह स्मरण इति ॥

असौ संस्कारः स्मरणे संस्कारमात्रज्ञाने यमहमद्राक्षं तम हंस्मरामीत्येवमात्मके प्रत्यभिज्ञायामपि तत्तेदन्तावगाहिज्ञाने सोयं देवदत्त रूपेऽपि हेतुः कारणम् । स्मरणे उद्बुद्धएकाक्येव प्रत्यभिज्ञा-यांश्चेन्द्रियसन्निकर्षसमन्वित इतिविवेकः । तदुद्बोधकाश्च चिन्ताद्याः। तदुक्तं सदृशदृष्टचिन्ताद्याःस्मृति वीजस्य बोधका इति ॥ १६० ॥

धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ।
गङ्गास्नानादियागादि व्यापारः परिकीर्त्तितः॥१६१॥
कर्मनाशाजलस्पर्शादिनाश्यस्त्वसौमतः ।

अदृष्टं निरूपयति । धर्माधर्माविति धर्माधर्मयोरुभयोरदृष्टमिति संज्ञा तत्रकोधर्म इत्याकाङ्क्षायामाह स्वर्गादीति । स्वर्गादिसाधनं स्वर्गादेः फलस्य साधनं उपायः धर्मः ? तत्सिद्धौ प्रमाणमाह गङ्गा स्नानादीति । गङ्गास्नानादेर्यागादेश्च स्वजन्यफलोत्पत्तिं प्रति योव्यापारः स एव धर्मः तत्रैव व्यापारकल्पने को हेतुरिति-

चेदुच्यते । यदि धर्मो न स्यात् तर्हि शास्त्रादौ प्रतिपादितं यागादेः स्वर्गादिकं प्रति कारणत्वमनुपपन्नं स्यात् यागादेश्चिरविनष्टतया कालान्तरभाविस्वर्गादिफलं प्रति पूर्ववृत्तित्वाभावात् स्वाव्यवहितपूर्ववर्त्तिन एव कारणत्वात् अतः कालान्तरभाविस्वर्गादिफलं प्रति यागादेः कारणतोपपादनार्थं तद्व्यापारतया धर्मः कल्पत इतिसारम् ॥ १६१ ॥ ननुयागादिध्वंसस्यैव तत्र व्यापारतास्तु किमदृष्टचरादृष्टकल्पनयेत्यत्राह कर्मनाशेति । ध्वंसस्यतत्र न व्यापारता यागादेर्व्यापारस्य कर्मनाशाजल स्पर्शादिना शास्त्रे नाश्यत्वाभिधानेननित्यस्य तस्य नाशयोगात् इत्येवाह कर्मनाशाजलस्पर्शेति । आदिना करतोयाविलङ्घनादिसमुच्चीयते यदुक्तम् "कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् । गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्त्तनात्" इति । यदि धर्मो न स्यात्तर्हि कर्मनाशाजलस्पर्शादिना कस्य नाशः स्यात् नच यागादेर्वा क्षेत्रादेस्तेन नाशः कल्पयितुं शक्यः यागादेस्ततः पूर्वमेव विनष्टत्वात् क्षेत्रादिविनाशस्य च लौकिकत्वेन तदर्थं शास्त्रप्रवृत्त्यभावात् अतोयस्तेन विनाश्यः स एव धर्म इति धर्म सिद्धिः ॥

अधर्मोनरकादीनां हेतुर्निन्दितकर्मजः ॥ १६२ ॥
प्रायश्चित्तादिनाश्योसौ जीववृत्ती त्विमौगुणौ ।
इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ॥१६३॥

अधर्मं निरूपयति अधर्म इति । नरकमारभ्य सर्वदुःखानां आदिना नारकिशरीरप्रभृतीनाञ्च हेतुः कारणमधर्मः निन्दितकर्मजः

निन्दितेभ्योवेदशास्त्रनिषिद्धेभ्योऽभक्ष्यभक्षणागम्यागमनापेयपान-लक्षणेभ्यः कर्मभ्योजायते ॥ १६२ ॥ तस्य नाशकमाह प्रायश्चि-त्तादीति। असावधर्मः प्रायश्चित्तेन पापनिर्वतकनैमित्तिककर्मवि-शेषेण आदिना ज्ञानभोगादिसमुच्चयः तदादिना तदन्यतमेन नाश्यः नाशयितुं योग्य इत्यर्थः प्रायश्चित्तं ज्ञानं भोगश्चैतेषांप्रत्येकोऽधर्म-नाशक इतिभावः। धर्माधर्मयोराश्रयमाह इमावुक्तलक्षणौ धर्माधर्मौ गुणौ जीववृत्तीजीवात्ममात्राधारौस्तः किञ्चेमौ वासनाजन्यौ सदसद्वासनया जन्येते ज्ञानादपितोभोगादपिनश्यतःअतएव ज्ञानि-नाकृते सुकृतदुष्कृमकर्मणी दग्धबीजतया तद्भोगप्रयोजके न भवत इति भावः ॥ १६३ ॥

शब्दोध्वनिश्च वर्णश्च मृदङ्गादिभवोध्वनिः ।
कण्ठसंयोगादिजन्या वर्णास्ते कादयोमताः ॥१६४॥

शब्दं निरूपयति शब्दइति ।श्रोत्रग्राह्यत्वे सति गुणत्वं शब्दस्य लक्षणम्। शब्दत्वेऽतिव्याप्तिवारणाय गुणपदं वस्तुतस्तु श्रोत्रोत्पन्न शब्दस्यैव श्रोत्रग्राह्यत्वेन तद्भिन्नेऽव्याप्तिवारणाय श्रोत्रग्राह्यजाति मत्वेतात्पर्य्याद्गुणपदमनुपादेयम्।स शब्दोद्विविधोध्वनिवर्णभेदादि त्याह ध्वनिश्च वर्णश्च ध्वन्यात्मकोवर्णात्मक इत्यर्थः। तत्र धन्यात्मकः क इत्यपेक्षायामाह मृदङ्गादिभव इति। मृदङ्गाद्यवच्छेदेनोत्पन्नः शब्दः ध्वन्यात्मकः।वर्णात्मकमाह कण्ठेति। कण्ठसंयोगादिजन्यास्तेकादयो वर्णाः प्रत्येकं वर्णात्मकः शब्दः । आदिना तात्वादिस्थानान्त-रसंयोग परिग्रहः तथाचोक्तम् । अष्टौस्थानानिवर्णानामुरः कण्ठः

शिरस्तथा । जिह्वामूलं च दन्ताश्च नाशिकोष्ठौ च तालुच ॥ १ ॥
इति नाभिस्थानात् प्रयत्नविशेषप्रेरितोवायुरुरःप्रभृतिस्थानान्यभिघ्नन् शब्दविशेषानुत्पादयतीति शाब्दिकाडिण्डिमः ॥१६४॥

सर्वः शब्दोनभोवृत्तिः श्रोत्रोत्पन्नस्तुगृह्यते ।
वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्त्तिता ॥१६५॥
कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते ।

तस्योभयाविधस्य शब्दस्य विषयमाह सर्व इति। सर्व प्रकारकः ध्वन्यात्मको वर्णात्मकोऽपि वा शब्दः नभोवृत्तिः आकाशाश्रयोज्ञेयः। ननुदूरस्थशब्दस्य कथं ग्रहणमत आह श्रोत्रोत्पन्नस्तु गृह्यत इति। भवत्वेवं तथापि श्रोत्रपर्य्यन्तमेव तावत्तस्यागमनं दुर्घटं मूतत्वेन चलनासम्भवादत आह श्रोत्रे तदुत्पत्तिस्तु वीचितरङ्गन्यायेन कीर्त्तिता । इति । वीचिस्तरङ्गस्तेन यस्तरङ्गस्तन्न्यायेन तत्प्रकारेण अयमर्थः। यथा जलाशयजले प्रक्षिप्तेन लोष्टेन तावदेकस्तरङ्गो जन्यते स च तरङ्गन्तरं तच्च तरङ्गान्तरमेवं पूर्वपूर्वतरङ्गात्तदुत्तरोत्तरतरङ्गोत्पत्त्याऽन्तिमतरङ्गस्यापिकूलमागमनं भवति एवं मृदङ्गाद्यवच्छेदेनोत्पन्नः शब्दः शब्दान्तरं तच्च शब्दान्तरं एवं क्रमेण पूर्वपूर्वादुत्तरोत्तरोत्पत्त्या श्रोत्रस्य समीपमागत्य तत्रोत्पन्नो गृह्यते इति ग्रन्थकृन्मतम् ॥ १६५ ॥

मतान्तरमाह कदम्बेति । कस्यचिन्मते तदुत्पत्तिः श्रोत्रे शब्दस्योत्पत्तिः कदम्बकोरकन्यायात्कीर्त्तिता स च न्यायः कदम्ब-

कुसुमे कोरकेभ्यः समन्ततः कोरकाणि तेभ्यः कोरकाणि एवमा-त्मक एव माद्यशब्दात् दशदिक्षु दशशब्दास्तेभ्यः दशशब्दाजायन्त इति शब्द परम्परया श्रोत्रे ग्रहण भवति ॥

उत्पन्नः कोविनष्टः क इति बुद्धेरनित्यता ॥१६६॥
सोयं क इति बुद्धिस्तु साजात्पमवलम्बते ।
तदेवौषधमित्यादि सजातीयेऽपि दर्शनात् ॥१६७॥

नन्वध्यापनादानाच्च] नित्यस्य तस्योत्पत्तिः कथमत आह उत्पन्न इति । ककार उत्पन्नःककारोविनष्ठ इति ज्ञानाज्जानीमोवय मनित्यः शब्द इति ॥ १६६ ॥ ननु स एवायं क इति प्रत्यभिज्ञावलाज्ञित्यः स तत्कथमनित्य इत्युच्यते तत्राह सोयं क इति बुद्धिस्तु सजातीयवलम्बनतयाऽपि समाधातुं शक्यते कथमितिचेदुच्यते यदेवौषधं मयाभुक्तं तदेवौषधं त्वयाऽपि इति सजातीयेऽपि तादृशव्यवहारदर्शनान्न तेन नित्यत्वं सिध्यति इति ॥ १६७ ॥ इति पण्डित दुर्गादत्तशास्त्रि विरचिता कारिकावल्याः प्राज्ञमनोरमाख्याव्याख्या श्रीहरिर्जयति । शुभं भवतु ॥

---

# परिशिष्टम् ।

मुक्तावलीतः प्रशस्तपादभाष्ये कर्मणो निरूपणे ह्येतावान्विशेषः ।

तथाहि—उत्क्षेपणादिष्वेकमपि कर्म कर्मत्वरहितं न । सर्वमपि कर्म्म शुतरं विनश्यति । एकदा एकस्मिन्द्रव्ये एकमेव कर्म वर्त्तते । न युगपद्द्वे विरुद्धे परस्परप्रतिबन्धेन संयोगविभागानुत्पत्त्यापत्तेर्नापि सजातीयेद्वेऽन्यतरवैयर्थ्यापत्तेः ॥

उत्क्षेपणादिकं चतुर्विधमपि कर्म शरीरावयवेषु, मुसलादिष्वन्येषु वा द्रव्येषु प्रयत्नपूर्वकं भवति पञ्चमं गमनन्तु प्रयत्नपूर्वकमेव ।

ननूत्क्षेपणादीनां जाति पञ्चकत्वमयुक्तं गमनात्सर्वेषामभेदात् यथोत्क्षेपणादिषूर्ध्वं गच्छति, अधोगच्छतीति प्रत्ययदर्शनात्सर्वमेवेद मुत्क्षेपणादिकं गमनमेवेति चेन्न पशुत्वेन गोमहिष्यादीनामैक्येऽपि माहिष्यादिभ्यो व्यावृत्तिदर्शनात्तथा कृष्णपीताद्यनेकवर्ण गोव्यक्तिषु इयं गौरियं गौरित्यनुवृत्तिदर्शनात्पशुत्वात् गोत्वं यथा पृथक् सामान्यं तथोत्क्षेपणादिष्वपि प्रतिवर्गमितरव्यावृत्ता प्रत्ययानुगमदर्शनादुत्क्षेपणत्वादि जातिपञ्चककल्पनं ज्ञेयम् । उदाद्युपसर्गविशेषादपि तेषां परस्परं विशेषः यद्येवं पञ्चैवेत्यवधारणानुपत्तिः निष्क्रमणप्रवेशनादिष्वपि तथा भावादितिचेन्न उत्क्षेपणादीनामिव निष्क्रमण प्रवेशनादीनां जातिभेदाभावात् ॥

अथ गमनत्वं किं कर्मत्व पर्य्याय आहो स्विदपरं सामान्यमिति, कुतस्ते संशयः समस्तेषूत्क्षेपणादिषु कर्म प्रत्ययवद्गमनप्रत्ययाविशेषात् कर्मत्वपर्य्याय इति गम्यते । यतस्तूत्क्षेपणादिवद्विषसंज्ञया

अभिहितं तस्मादपरं सामान्यं स्यादितिचेन्न कर्मत्वपर्य्यायत्वात् आत्मत्वपुरुषत्ववत्कर्मत्वपर्य्याय एव गमनत्वमिति अथ विशेष संज्ञया किमर्थं गमनग्रहणं कृतमिति न भ्रमणाद्यवरोधार्थत्वात् । उत्क्षेपणादि शब्दैरनवरुद्धानां भ्रमणपतनस्यन्दनादीनामवरोधार्थं गमनग्रहणं कृतमिति । अन्यथा हि यान्येव चत्वारि विशेषसंज्ञयोक्तानि तान्येव सामान्यविशेषसंज्ञाविषयाणि प्रसज्येरन्निति । इतोऽग्रे प्रयत्नपूर्वकोऽप्रयत्नपूर्वककर्मप्रकारा उक्तास्ते विस्तरभयान्नोक्तास्तत्रैव द्रष्टव्याः इति कर्म निरूपणम् ॥

यत्सामान्यं यस्मिन्पिण्डे गतं स तस्य स्वो विषयः तत्र तत्सर्वस्मिन् गतं ( समवेतं ) सर्वत्र तत्प्रत्ययात् । अथ च सामान्यं येन स्वभावेनैकत्र पिण्डे वर्त्तते तेनैव स्वभावेन पिण्डान्तरेऽपि वर्त्तते तत्रापि तत्प्रत्ययाविशेषात् किंचेदमेकस्मिन्पिण्डे द्वयोः पिण्डयोर्बहुषु वा पिण्डेषु आत्मरूपानुगमप्रत्ययं करोति यतोऽतो द्वित्वादिभ्यो भिन्न रूपम् । एतेन अनेकवृत्तित्वे सति यदकद्विबहुष्वात्मस्वरूपानुगम प्रत्ययकारणं तत्सामान्यमिति लक्षणं फलितम् तद्द्विविधं परमपरं चेति । तत्र परं सत्ता सामान्यमनुवृत्ति प्रत्ययकारणमेव, यद्यपि प्रत्यक्षेण प्रतीयते सत्ता तथापि विप्रतिपन्नं प्रत्यनुमेयमेवेत्युच्यते तथाहि । यथा परस्पर विलक्षणरूपेषु चर्मवस्त्रादिष्वन्य स्मान्नीलरूपाभि सम्बन्धात् नीलं नीलमिति प्रत्ययानुवृत्तिः साचार्थान्तराद्भवितु मर्हतीति यत्तदर्थान्तरं सा सत्तेति सिद्धम् । यस्मात् सत्ता त्रिषु द्रव्यादिषु प्रत्ययानुवृत्तिं करोत्ति न व्यावृत्तिं तस्मात्सामान्यमेव न विशेषः । अपरं द्रव्यत्व गुणत्व कर्मत्वादि अनुवृत्तिव्यावृत्ति हेतुत्वात्

सामान्यं विशेषश्च भवति, तत्र द्रव्यत्वं परस्परविशिष्टेषु पृथिव्यादिष्वनुवृत्तिहेतुत्वात् सामान्यं गुण कर्मभ्यो व्यावृत्ति हेतुत्वात् विशेषः। तथा गुणत्वं परस्प विशिष्टेषु रूपादिष्वनुवृत्ति हेतुत्वात् सामान्यं द्रव्य कर्मभ्यो व्यावृत्ति हेतुत्वाद्विशेषः तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिस्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः। एवं पृथिवीत्वरूपत्वोत्क्षेपण त्वगोत्वघटत्वपटत्वादीनामपि प्राण्यप्राणिगतानामनुवृत्तिव्या वृत्ति हेतुत्वात् सामान्यं विशेषभावः सिद्धः। एतानि तु द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन सामान्यानि स्वाश्रयविशेषकत्वाद्भक्त्या विशेषाख्यानीति। लक्षण भेदा देषां द्रव्य गुण कर्मभ्यः पदार्थान्तरत्वं सिद्धम्। अतएव नित्यत्वम् द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वम् प्रत्येकस्वाश्रयेषु लक्षणाविशेषाद्विशेषलक्षणाभावाच्चैकत्वम्॥ यद्यप्यपरिच्छिन्नदेशानि सामान्यानि भवन्ति तथाप्युपलक्षणनियमात् कारण सामग्री नियमाच्च स्वविषय सर्वगतानि। अन्तराले च संयोग समवायवृत्त्यभावादव्यपदेश्यानीति॥ इति सामान्य निरूपणम्॥

विशेषस्य—

अन्तेषु भवा अन्त्याः स्वाश्रयविशेषकत्वाद्विशेषाः। विनाशारम्भ रहितेषु नित्येष्वण्वाकाशादिगात्ममनस्सु प्रतिद्रव्यमेकैकशोवर्त्तमाना व्यावृत्ति बुद्धि हेतवः। यथास्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृति गुणक्रियावयव संयोगनिमित्ता प्रत्ययव्यावृत्तिर्दृष्टा गौः शुक्लः शीघ्रगतिः पीनः ककुद्मान् महाघण्टइति, तथास्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृति गुणक्रियेषु परमाणुषु मुक्तात्मनस्सु च अन्य

निमित्ता संभवादयेभ्यो निमित्तेभ्यः प्रत्याधारं विलक्षणोयं विक्ष णोयमिति प्रत्ययव्यावृतिः देशकाल विप्रकर्षे च परमाणौ स एवायमिति प्रत्यभिज्ञानं च भवति तेऽन्त्या विशेषाः यदिपुनरन्त्य विशेषमन्तरेण योगिनां योगजाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं च स्यात् ततः किं स्यान्नैवं भवति। यथा न योगजाद्धर्माद् शुक्ले शुक्ल प्रत्ययः संजायते अत्यन्तादृष्टे च प्रत्यभिज्ञानं यादि स्यान्मिथ्या भवेत् तथेहाप्यन्त्य विशेषमन्तरेण योगिनां न योग जाद्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा भवितुमर्हति। अथा न्त्य विशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्ति कल्प्यते इति चन्न तादात्म्यात्। इहातदात्मकेष्वन्य निमित्त प्रत्ययो भवति यथाघटादिषु प्रदीपात् नतु प्रदीपे प्रदीपान्तरा यथा गवाश्वमांसादीनांस्वत एवाशुचित्वं तद्योगादान्येषां तथे हापि तादत्म्यादन्त्यविशेषषु स्वतएव प्रत्ययव्यावृत्तिः तद्योगात् परमाण्वादिष्विति ॥ इति विशेषनिरूपणम् ॥

समवायस्य—

अयुतसिद्धानामाधार्य्याधारभूतानां यःसंबन्धइह प्रत्यय हेतुःस समवायःद्रव्यगुणकर्म सामान्य विषषाणां कार्य्य कारण भूतानांयुत सिद्धानामाधार्य्याधारभावेनावस्थितानामिहेदमिति बुद्धिर्यतो भवति यतश्चासवर्गतानामधिगतान्यत्वानामविष्वग्भाव: स समवायाख्यः संबन्धः। कथम् यथेह कुण्डे दधीति प्रत्यय: संबन्धे सति दृष्ट, तन्तुषु पटः, इह द्रव्ये गुणकर्मणी इह द्रव्यगुणकर्मसु सत्ता द्रव्ये, द्रव्यत्वम् इह गुण गुणत्वं इह कर्मणि कर्मत्वं इह नित्यद्रव्येषु विशेषाइति प्रत्ययदर्शनादस्त्येषां सम्बन्ध इति ज्ञायते

न चासौ संयोगः संबंधिनामयुतसिद्धत्वात् अन्यतरकर्मादिनिमि-त्तासंभवात् विभागान्तत्वदर्शना दधिकरणाधिकर्त्तव्ययोरेवभा-वादिति । स च द्रव्यादिभ्यः पदार्थान्तरं भाववल्लक्षणभेदात् यथा भावस्य द्रव्यत्वादीनांस्वाधारेषु आत्मानुरूपप्रत्ययकर्तृत्वात्स्वा-श्रयादिभ्यः परस्पर तश्चार्थान्तरभावः तथा समवायस्यापि पञ्चसु पदार्थेष्विहेतिप्रत्ययदर्शनात् तेभ्यः पदार्थान्तरत्वमिति । न च संयोगवन्नानात्व लिङ्गाविशेषात् विशेषलिङ्गाभावाच्च । तस्माद्भाव-वत्सर्वत्रैकः समवाय इति ॥ ननु यद्येकः समवायोद्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादि विशेषणैः सह सम्बन्धैकत्वात् पदार्थसङ्कर-प्रसङ्ग इति न आधाराधेय भाव नियमात् । यद्यप्येकः समवायः सर्वत्र स्वतन्त्रः तथाप्याधारा धेयनियमोऽस्ति । कथं द्रव्येष्वेवं द्रव्य-त्वं गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वमिति । एवमादि कस्माद्-न्वयव्यतिरेकदर्शनात् इहेति समवाय निमित्तस्य ज्ञानस्यन्वय-दर्शनात्सर्वत्रैकः समवाय इति गम्यते । द्रव्य त्वादि निमित्तानां व्यतिरेक दर्शनात् प्रतिनियमोज्ञायते । यथाकुण्ड दध्नाः संयोगः संयोगैकत्वे भवत्याश्रयाश्रयिभावनियमः । तथा द्रव्यत्वादीनामपि समवायैकत्वेऽपि व्यङ्ग्यव्यञ्जकशक्ति भेदादाधारा धेय नियम इति ।

संबन्धयनित्यत्वेऽपि न संयोगवदनित्यत्वं भाववदकारणत्वात् यथा प्रमाणतः कारणानुपलब्धेर्नित्योभावइत्युक्तम् तथा सम-वायोऽपीति नह्यस्य किञ्चित्कारणं प्रमाणत उपलभ्यत इति कया वृत्त्यासाद्रव्या दिषु समवायो वर्त्तते । न संयोगः संभवति तस्य गुण[illegible]न द्रव्याश्रितत्वात् । नापि समवायः तस्यैकत्वात् न चान्या

वृत्तिरस्तीति न तादात्म्यात् । यथा द्रव्यगुणकर्मणां सदात्मकस्य भावस्य नान्यः सत्तायोगोऽस्ति एवमविभागिनो वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिरस्ति तस्मात्स्वात्मवृत्तिरत एवातीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात् स्वात्मगतसंवेदनाभावाच्च । तस्मादिहबुद्ध्यनुमेयः समवायः इति ॥

इति प्रशस्तपादभाष्ये समवायपदार्थः

॥ श्री हरिर्जयतितराम् ॥

